# WORKS BY PANDITA KSHAMA ROW

1 **Satyagraha-Gita :** (Paris 1932) Story of Gandhiji's NCO movement This has been prescribed as a text for B A of 1957 course of Agra University, and in Sanskrit Vidyapith, Bombay

2 **Kathapanchakam :** (Bombay 1934) Collection of five short stories in verse

3 **Vichitra-Parishad-Yatra :** (Bombay 1939) Author's personal experiences at the Trivandrum session (1938) of the All-India Oriental Conference

4 **Shankar-Jeevanakhyanam :** (Bombay 1939) Biographical sketch of her father, S P Pandit

5 **Mira Lahari :** (Bombay 1944) Life and songs of Mirabai *Text for Prajnya Examination of P E P S U*

6 **Uttar Satyagraha-Gita :** (Bombay 1948) (With English translation) Narration of achievements of Gandhiji up to end of 1944 Won first prize in All-India Sanskrit competition, Madras

7 **Tukaram-Charitam :** (Bombay 1950) (With English translation of Sanskrit text) First prize Mahakavya in 1952 (Ayodhya) Life and Teachings of the poet Saint of Maharashtra

8 **Ramdas-Charitam .** (Bombay 1953) (With English translation of Sanskrit text) Life and Teachings of the poet Saint of Maharashtra Verses in 1st Anthology of Sanskrit Akademi, 1953

9 **Grama-Jyoti :** (Calcutta 1954) Stories in verse on Gujarat villagers' bravery

10 **Sri Dnyaneshwar-Charitam :** (Bombay 1955)

11 ***Kathamuktavali :*** *(Bombay 1955) Collection of 15* short stories in prose Rapid reader for 1957 M A Agra University

12 **Seven Playlets :** Published in issues of the Sanskrit monthly Manjusha, Calcutta



**पण्डिता सौ. क्षमा राव**

साहित्यचन्द्रिका

**जन्म : ४-७-१८९०** **मृत्यु : २२-४-१९५४**

॥ श्रीगणेशाय नमः ॥

# स्वराज्य–विजयः

Presented by the Ministry of Education and Social Welfare Government of India.


पण्डिता सौ. क्षमा राव



प्रथमावृत्तिः : १९६२

न. मा. त्रिपाठी, प्रा. लि.
प्रिन्सेस स्ट्रीट, मुम्बापुरी २

# अनुक्रमः

# अनुक्रमः

# शुद्धिपत्रम् ।

| पृष्ठम् | श्लोकांकः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ६ | जेतणां | जेतॄणां |
| ९ | ७ | पूजितास्तेऽत्र : वध- | पूजितास्तेत्र वध- |
| २४ | ९ | पर्यटद् | पर्याटद् |
| २८ | २१ | कचिन्महा- | कचिन्महा- |
| २९ | २५ | वीरयैर्दृष्वा | वीरैर्युदृष्वा |
| २९ | २६ | सर्वथवै | सर्वथैव |
| २९ | २९ | विनमयमिति | विनिर्मयमिति |
| ४० | ४९ | पस्यास्तथापि | पश्चास्तथापि |
| ४१ | ९ | त्यक्तस्याप्यखिलजनैः | त्यक्तस्याप्यखिलैर्जनैः |
| ४५ | १ | पत्रिकान्दचतुष्टयात् | -चतुष्टयात् |
| ४८, ४९, ५१ | शीर्षकम् | पल्नीग्राम- | पल्लीग्राम- |
| ५३ | १६ | नामसाहस्रादेक- | नामसाहस्रादेक- |
| ५३ | १८ | तमुपभत्य | तमुपश्रुत्य |
| ५५ | १० | विर्ला दीयेच्छां | विर्ला मदीयेच्छां |
| ५६ | १६ | ॅपविद्रोह | द्वेपविद्रोह |
| ५९ | २ | चतं | श्रुतं |
| ६६ | २ | स॑ | सर्वे |
| ६६ | ३ | निमुको | निर्मुक्तो |
| ७४ | ३ | भोगलोलुपा | भोगलोलुपाः |
| ७५ | १२ | दास्यभावमुपाश्रितः | दास्यभावमुपाश्रितैः |
| ७९ | २६ | परिवृत्याभवेद् भवम् | परिवृत्त्या भवेद् ध्रुवम् |
| ७९ | ३२ | त्वेभिनृपते- | त्वेभिनृपते- |
| ९३ | २० | पर तु | परं तु |
| ९३ | २२ | कल्लकत्ता- | कलकत्ता- |
| ९७ | १४ | यदिस्लामश्रतौ | यदिस्लामश्रुतौ |
| १०१ | ३ | कचिदन्यश्चे | कचिदन्यैश्च |
| १११ | २९ | ब्रहि नः | ब्रूहि नः |
| ११२ | १ | -वार्ताभिवल्ही- | -वार्ताभिर्वल्ही- |
| ११२ | ६ | अवसितोऽमवन् | अवसितोऽमवत् |
| ११३ | २२ | -मनयस्तलमेकं | -मनयस्तैलमेकं |
| ११५ | शीर्षकम् | राधाकुमुन्द | राधामुकुन्द |

| पृष्ठम् | श्लोकांकः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११७ | ३२ | ख्यां वः सह्रशत– | सहख्यां वः शत– |
| १२७ | शीर्षकम् | आसिया सम्मेलने | असियासम्मेलने , |
| १३० | ४९ | मानुषव्यक्तीराता | मानुषव्यक्तीरातों |
| १३५ | २८ | कथं स्थातु | कथं स्थातुं |
| १३९ | शीर्षकम् | कोराण० | रामरहीमसाम्यनिदर्शनम्। |
| १४८ | १४ | कल्पेताम् | कल्पताम् |
| १७६ | शीर्षकम् | गन्थोपसंहारः | ग्रन्थोपसंहारः |

॥ श्रीः ॥

# प्रथमोऽध्यायः

## देशखण्डनम् ।

यो भूत्वापि निराकृतिर्वसुमतीमुद्धर्तुमात्मौजसा
स्वीचक्रे मनुजाकृतिं कलियुगे साक्षात्परः पूरुषः ।
तं लीलानरविग्रहं समदृशं सेवैकबद्धादरम्
सत्यार्हिंसननित्यपूतमनसं प्रेम्णाभिवन्दामहे ॥ १ ॥

अथ सन्धानसंवादः प्रवृत्तो गान्धिजिन्नयोः ।
पाकिस्थानं समुद्दिश्य सर्वथाऽभून्निरर्थकः ॥ २ ॥

जिन्नः प्रतिनिविष्टोऽभूत्स्वसमीहितसाधने ।
तं विचालयितुं गान्धिर्न शशाक दुराग्रहात् ॥ ३ ॥

सेवाग्रामाश्रमं यावदध्युवास महामुनिः ।
नाना दिग्देशतो लेखास्तावत् तत्करमापतन् ॥ ४ ॥

विभाजनाज्जन्मभूमेरनर्थान् सम्भविष्यतः ।
ध्यायन्तो देशजा लोका बिभ्यति स्म निरन्तरम् ॥ ५ ॥

तस्मात्प्रार्थयमानास्ते लिखन्ति स्म दिने दिने ।
"मा सर्वथाऽनुमोदस्व भारतस्य विभाजनम् ॥ ६ ॥

सुखं हि भवदायत्तं सर्वभारतवासिनाम् ।
जिन्नस्तु निजपक्ष्याणां केवलं शुभमिच्छति" ॥ ७ ॥

इत्यादि लिखितं प्रेक्ष्य परमानर्थशङ्किनाम् ।
ददौ प्रत्युत्तरं गान्धिर्वृत्तपत्रेषु तद्यथा ॥ ८ ॥

"अयि भो बान्धवा मा स्म भैष्टास्मिन् प्रस्तुते मनाक् ।
प्राणेभ्योऽपि हि मे श्रेयान् मातृभूमेः सुखोदयः ॥ ९ ॥

खण्डनं स्वशरीरस्य करिष्येऽहं सहस्रशः ।
न तु स्वप्नेऽपि विच्छेदं चिन्तयिष्ये जनुर्भुवः ॥ १० ॥

यावन्नैकीभविष्यन्ति भारते हिन्दुमुस्लिमाः ।
तावत्स्वराज्यसम्पत्तिः सर्वथा नोद्भविष्यति ॥ ११ ॥

इत्याहुः शासका आंग्लाश्चिरादपि पुनः पुनः ।
मुस्लिमास्त्वनुवर्तन्ते सदा जिन्नस्य शासनम् ॥ १२ ॥

अतो मासद्वयात्पूर्वं तत्सन्धानसमुत्सुकः ।
जिन्नेन मासपर्यन्तमकार्षं साधु मन्त्रणम् ॥ १३ ॥

तद्वृथाऽभूत् तथाप्यत्र न भग्नाशोऽस्मि निश्चितम् ।
भगवत्कृपया जह्याद् जिन्नोसौ स्वदुराग्रहम् ॥ १४ ॥

जन्मभूमिर्विभक्ता चेद् विपद्ग्रस्ता भविष्यति ।
इति स्वयं प्रतीतः स्यात्स विचारपरः पुनः ॥ १५ ॥

इत्यहं परमात्मानं प्रार्थये च दिवानिशम् ।
स एव सत्यं सत्यं च परमात्मेति मे मतिः ॥ १६ ॥

स एव सङ्कटेऽस्माकं भविता मार्गदर्शकः ।
सारे सत्याग्रहस्यास्मिन् जीवितं मेऽवलम्बितम् ॥ १७ ॥

राजकीयगतिष्टम्भादद्य वित्रासितो जनः ।
यथा न जनयेत्क्षोभं तथा रक्ष्या हि शान्तता ॥ १८ ॥

इष्टसिद्धिर्भवत्येवेत्यस्ति मे प्रत्ययः सदा ।
अत्यन्तविषमे कालेऽप्येष मे ह्यवभासत ॥ १९ ॥

न चाक्षुषप्रमाणेन तदस्तित्वसमर्थनम् ।
विधातुं शक्यते दिव्यः प्रकाशः प्रत्ययो हि सः ॥ २० ॥

अस्मिन्नङ्गीकृते कार्ये मम नास्ति पराजयः ।
भवेयमन्यथा ध्यायन् देवविश्वासघातुकः ॥ २१ ॥

मत्पुरोऽस्ति हि यत्कार्यं तद्विधेयं मया मुदा ।
किमीयं च कुतस्त्यं चेत्यादिचिन्ता न मां स्पृशेत् ॥ २२ ॥

यो भवेदप्रमेयोऽर्थस्तत्परामर्शसाहसम् ।
न कुर्यादिति जानीमो विवेकोद्भवया धिया ॥ २३ ॥

सत्याभासग्रही नाहं न महात्मा न वा बुधः ।
अस्म्यहं भूमिजश्चान्यप्राणिवद्दोषभागपि ॥ २४ ॥

मादृशास्तु विनश्यन्तु शतशोऽपि शरीरिणः ।
मा पुनः सत्यलोपो भून्मद्विधानां परीक्षणे ॥ २५ ॥

निरन्तरमहं यत्नात्सत्यस्यान्वेषणे रतः ।
न पुनर्लब्धमद्यापि तत्सत्यं स्वस्वरूपतः ॥ २६ ॥

न मत्पराभवः कार्ये मम धैर्यं विनाशयेत् ।
स धियं तनुते शुद्धां धीः शुद्धा मार्गदर्शिनी ॥ २७ ॥

परमात्मनि विश्वासाद्विश्वासो मे नरेष्वपि ।
नरेष्वपि च विश्वासाद्विश्वासः परमात्मनि ॥ २८ ॥

ईश्वरेच्छापरिज्ञानं ममैकस्य न केवलम् ।
सर्वस्यापि नरस्यैषा स्फुरत्यन्तर्दिने दिने ॥ २९ ॥

वयं न शृणुमस्तस्याः सूक्ष्मनादं प्रमादिनः ।
अन्धा इव न पश्यामो ज्वालास्तम्भं पुरोगतम्" ॥ ३० ॥

इति योधामृतं वर्षन् सान्त्वयित्वा स्वदेशजान् ।
राज्ञः प्रतिनिधिं द्रष्टुमैच्छत्संधित्सया यतिः ॥ ३१ ॥

स प्रभुर्वेवलो नाम तत्संधानपराङ्मुखः ।
न्यषेधीदागमं साधोरसकृत्सिमलाचलम् ॥ ३२ ॥

अथ श्रीकस्तुराम्बायाः स्मारकत्वाय सञ्चितः ।
यः परः कोटिरूप्याणां राशिरासीदवस्थितः ॥ ३३ ॥

वृद्धये तस्य तत्सर्वं महात्मा न्यस्तवान्धनम् ।
राजकोशेऽभवद्येन लाभो राज्यस्य शासितुः ॥ ३४ ॥

रिक्तीभूते धनागारे महायुद्धमहाव्ययात् ।
वृद्धिसम्पादकं गान्धिमभ्यनन्दत्सदुक्तिभिः ॥ ३५ ॥

मुहुः प्रत्यादिशद्यावो गान्धेर्निजदर्शनम् ।
सम्राट्प्रतिनिधिः सोऽयं तं दिल्लीपुरमाह्वयत् ॥ ३६ ॥

शान्तां राष्ट्रोद्यमज्वालामुदीपयितुमुत्सुकः ।
प्रभोः श्रीवेवलस्यागात्पार्श्वं सन्धित्सया मुनिः ॥ ३७ ॥

हिन्दुमुस्लिमवैमत्यादाङ्ग्लराज्यं सुरक्षितम् ।
तिष्ठतीति विवेदासौ सम्राट्प्रतिनिधिर्दृढम् ॥ ३८ ॥

अथ कौटिल्यमाश्रित्य जिन्नपक्षीयतां गतः ।
हिन्दुमुस्लिमलोकानां महद्वैरमजीजनत् ॥ ३९ ॥

एकतो देशविच्छेदे स जिन्नं मोदसाह्वयत् ।
अन्यतः पक्षयोरैक्यं विना नैव स्वतन्त्रताम् ॥ ४० ॥

कदापि प्राप्नुयुर्लोका इति श्रीवेवलो ब्रुवन् ।
प्रशशंसाग्रतः श्रीमद्गान्धेर्भारतखण्डनम् ॥ ४१ ॥

हिन्दुमुस्लिमलोकानामनैक्यं प्रतिबन्धकम् ।
भारतीयाभिकाङ्क्षाया इति स्पष्टमवोचत ॥ ४२ ॥

वादोत्तरं महात्माऽथ प्रत्यगाद्वरधापुरम् ।
विसृज्य राज्यसूत्रस्य ग्रन्थिमेताममोचिताम् ॥ ४३ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये देशखण्डनं नाम
प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः
## सेवाग्रामवृत्तवर्णनम्

बाणाब्धिग्रहचन्द्राङ्के* वत्सरे यदुपानमत् ।
तदत्र चरितं पुण्यं वर्ण्यते श्रीमतो मुनेः ॥ १ ॥

अथ राष्ट्रसभा तस्थौ शासकेभ्यः पराङ्मुखा ।
यावदासीन्महायुद्धं प्रचण्डमधिकाधिकम् ॥ २ ॥

गतकार्तिकमारभ्य सेवाग्रामे वसन् सुखी ।
महात्मा सहसा शीतकासग्रस्तोऽति विव्यथे ॥ ३ ॥

संभाषणश्रमो मा भूदिति वैद्यैर्निबोधितः ।
द्वित्रानधारयन्मौनं सप्ताहान्नियमास्थितः ॥ ४ ॥

नित्यमागन्तुकैः सार्धमात्मसंदर्शनोत्सुकैः ।
लेखनेन कथालापमकरोद्बद्धवाङ्मुनिः ॥ ५ ॥

आसीदेकः प्रकोष्ठेऽस्य वर्णमालामयः पटः ।
तत्र साङ्गुलिनिर्देशं चक्रे प्रश्नोत्तराणि सः ॥ ६ ॥

अनायासो महात्मायमेकाक्षरवचःपटुः ।
स्वयोगक्षेमनिर्वाहे शान्तवृत्तिरपारयत् ॥ ७ ॥

स्थितिं तादात्विकीं देशे ध्यायता तेन निश्चितम् ।
संधिः कार्यो मयैवाद्य शर्मणे पक्षयोरिति ॥ ८ ॥

निर्भयं सर्वयत्नेषु कृतेष्वपि महात्मना ।
संधानं चेन्न कुर्यातां द्वौ पक्षौ चिक्तयोर्मतिम् ॥ ९ ॥

कातर्यमतिजाड्यं च ताभ्यामाविष्कृतं भवेत् ।
इत्यूचुः पक्षयोरेव भूयिष्ठाः सद्विवेकिनः ॥ १० ॥

अथामेरिकखण्डस्य येलविद्यालयात् सुधीः ।
सेवाग्रामं समायातो देहिसज्ञुपनामभाक् ॥ ११ ॥

---

* १९४५ क्रिस्ताब्दे

स जगाद विना गान्धिं नास्त्यन्यः पुरुषो भुवि ।
स्वधर्मनियमासक्तः संगरेणाप्यबाधितः ॥ १२ ॥

शतवर्षोत्तरं रूस्वेल्टचर्चिलस्टालिन्मुखाञ्जनान् ।
विस्मृत्य जगती गान्धेर्नामघोषं करिष्यति ॥ १३ ॥

सम्नर्हेल्साभिधश्चान्यो लेखकोऽमेरिकोद्भवः ।
स्वप्रबन्धेऽलिखच्छान्तिमार्गदर्शकनामनि ॥ १४ ॥

इतिहाससुसंस्कृत्योरध्यात्मविषयेऽपि वा ।
भारतादधिकः कोऽपि न देशः शान्तिवत्सलः ॥ १५ ॥

राष्ट्रियं भारते कृत्यं गान्धिना यत्प्रवर्तितम् ।
वर्धिष्णोः प्राच्यखण्डस्य सहकाराय कल्पते ॥ १६ ॥

जगद्रूपमहासंस्थां संप्रविश्याथ भारतम् ।
सर्वराष्ट्रियमेलेषु पदं योग्यमवाप्स्यति ॥ १७ ॥

क्रमेण गान्धिरुल्लाघः संवृत्तोऽभवदञ्जसा ।
सूत्रनिर्माणयज्ञं च कर्तुमारब्धवान्पुनः ॥ १८ ॥

रोमारोलांसमाख्यस्य मृतिवार्तां सुहृन्मणेः ।
श्रुत्वा न तत्र विश्वासमकरोदब्रवीच्च सः ॥ १९ ॥

वृत्तमेतदसत्यं स्याद्यथोदन्तः पुराभवत् ।
न श्रद्धेयमिदं हन्त भूयान्मित्रं निरामयम् ॥ २० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये सेवाश्रमवृत्तवर्णनं नाम
द्वितीयोऽध्यायः ॥



# तृतीयोऽध्यायः ।

## सत्याग्रहोपदेशः

माघस्यान्तिमसप्ताहे स्वातन्त्र्यदिवसोत्सवम् ।
पुनरुद्घोषयन्नूचे श्रीमान् गान्धिः शुचिव्रतः ॥ १ ॥

" आ-दास्यबन्धनिर्मुक्तेरा-स्वातन्त्र्यफलोदयम् ।
नास्ति भो मम विश्रान्तिः प्राणेभ्यो जन्मभूः प्रिया ॥ २ ॥

इति व्रतग्रहाद्ब्दा मम पञ्चदशाल्ययुः ।
यत्सिद्ध्यै प्रार्थयेऽनन्तप्रभावं परमेश्वरम् " ॥ ३ ॥

इत्युद्घोषयति प्राज्ञे सेवाग्रामान्महात्मनि ।
गृहीताः शतशो दिल्ल्यां राष्ट्रध्वजकरा जनाः ॥ ४ ॥

स्वातन्त्र्यदिवसे जोपं सेवाग्रामेऽपि शोधकाः ।
खनित्रमार्जनीहस्ताः पथि यान्ति स्म वृन्दशः ॥ ५ ॥

असांग्रामिकशस्त्रानप्यादिशन्पुररक्षिणः ।
श्रेणीभूयं न गन्तव्यं गम्यतां तु पृथक् पृथक् ॥ ६ ॥

अवमत्य तदादेशं मार्गशोधकमण्डलम् ।
तस्थौ तत्रैव निःशब्दं निश्चलं च निराकुलम् ॥ ७ ॥

प्रसंगं तं समुद्दिश्य प्रदोषप्रार्थनोत्तरम् ।
साभिनन्दं प्रहृष्टात्मा तपस्वी सोऽब्रवीद्यथा ॥ ८ ॥

" सन्त्यत्र निखिलाः संघा मदीयादेशवर्तिनः ।
अहमेव ततो वाच्यस्तेषामखिलकर्मसु ॥ ९ ॥

पुरा नैर्मोणिकः कार्यक्रमोऽशिक्ष्यत वो मया ।
सत्याहिंसात्मकान्नान्यः पन्थाः स्वातन्त्र्यलब्धये ॥ १० ॥

सायुधै रक्षकैर्मार्गे तर्जिता अपि निर्भरम् ।
न विपर्यासमापन्ना इति स्तुत्याः स्थ सर्वथा ॥ ११ ॥

असांग्रामिकशस्त्राश्चेदगमिष्यत तद्वशम् ।
न सत्याग्रहिणोऽमंस्ये हन्त वः कातरान् पुनः ॥ १२ ॥

स्थैर्यगाम्भीर्यवृत्तीनां युष्माकं पुरतो ह्यमी ।
सशस्त्रा अपि संजाता रक्षका निष्प्रयोजनाः ॥ १३ ॥

यदि कोपवशं यूयं दुर्दैवादगमिष्यत ।
तदाग्नेयास्त्रवर्षं तेऽकरिष्यन् पुररक्षकाः ॥ १४ ॥

हृदन्तःप्रेरणा काचिज्जाता वो मार्गदर्शिनी ।
यत्सत्यं परमात्मा सा मया हि व्यपदिश्यते ॥ १५ ॥

अस्ति मुख्याधिकारो नः स्वराज्याप्तिः स्वजन्मतः ।
मन्त्रोऽयं तिलकाद्यैः प्राक् पवित्रः समुदीरितः ॥ १६ ॥

सत्येनाहिंसयैवाद्य मन्त्रसिद्धिरवाप्स्यते ।
नैर्माणिकक्रियोद्योगे हन्त ग्रामीणकोटिभिः ॥ १७ ॥

उत्सेकं न भजध्वं भोः शास्त्ररक्षकनिर्जयात् ।
उत्सेको हि विनाशाय नम्रता निकषोऽस्तु वः" ॥ १८ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये मार्गशोधकानां
सत्याग्रहोपदेशात्मकः तृतीयोध्यायः ।



# चतुर्थोऽध्यायः

## विश्वयुद्धसमाप्तिः ।

करोति स्म महायुद्धं जगतीं तमसावृताम् ।
तावद्धिट्लरवीरस्य मृतिवार्ता विशुश्रुवे ॥ १ ॥

विश्वयुद्धप्रसंगेन कृत्वात्यन्तधनव्ययम् ।
आङ्ग्लभूर्भारतस्याभूदृणग्रस्ताधिकाऽधिकम् ॥ २ ॥

अवर्धत विपज्जालमाङ्ग्लभूमेर्दिने दिने ।
अत्यन्तशोचनीयाऽऽसीदाङ्ग्लानां हि गृहस्थितिः ॥ ३ ॥

भयानकमिदं युद्धं षड्भिरब्दैः प्रवर्तितम् ।
समाप्तिमगमज्ज्येष्ठे मासि दैवानुयोगतः ॥ ४ ॥

फ्रान्साङ्ग्लामेरिकारूसीप्रदेशेषु जितारिषु ।
दिक्षु दिक्षु समश्रावि प्रहर्षस्य महाध्वनिः ॥ ५ ॥

जेतॄणां शुश्रुवे यावज्जयघोषप्रतिध्वनिः ।
हाहाकारः श्रुतस्तावच्छार्मण्येतालिदेशयोः ॥ ६ ॥

ये सेनापतयः पूर्वं गोरिंगकैटलादयः ।
शार्मण्यैः पूजितास्तेऽद्य वधदण्ड्या मताः परैः ॥ ७ ॥

परस्त्रीलोलुपः पूर्वं दुष्टबुद्धिर्दशाननः ।
न केवलं स्वयं नष्टः स्वं कुलं च व्यनाशयत् ॥ ८ ॥

प्रभावोत्कर्षगृध्नुः सन् कृत्स्नविश्वजिगीषया ।
हिट्लरोऽपि विनष्टासुर्मातृभूमिं व्यनाशयत् ॥ ९ ॥

अहो यूरोपदेशीयाः ख्रिस्तधर्मानुयायिनः ।
विस्मरन्ति गुरोर्वाक्यं तदेतत्कलिचेष्टितम् ॥ १० ॥

यदहिंसात्मकं धर्ममनादृत्याभवन्निमे ।
देशसंरक्षणव्याजाद्रिपुरक्तपिपासवः ॥ ११ ॥

समाप्तेऽपि महायुद्धे पाश्चात्यावनिमण्डले ।
जापानामेरिकायुद्धं दिशि प्राच्यां प्रचक्रमे ॥ १२ ॥

समाप्ते विश्वयुद्धेऽस्मिन् जयोदयफलं भवेत् ।
संयुक्तानेकदेशानां न परं भारतावनेः ॥ १३ ॥

भारतीयाश्च वीरा हि युध्यमानाः सहस्रशः ।
रणभूमौ जहुः प्राणान् पाश्चात्यानां विमुक्तये ॥ १४ ॥

शार्मण्येतालिदेशीयरणक्षेत्रेष्वमी भटाः ।
प्रापुः सेनापतेः श्लाघां सर्वत्र बहुमानिताः ॥ १५ ॥

पुत्ररत्नेषु नष्टेषु दुःखार्ता भारतावनिः ।
विमुक्तिं चेन्न विन्देत धिग्दुरन्तं महामृधम् ॥ १६ ॥

स्वातन्त्र्यं भारतायाङ्ग्ला नोचेद्दद्युस्ततोऽचिरात् ।
भविष्यति ततोऽहिंसासंगरारम्भघोषणा ॥ १७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये विश्वयुद्धसमाप्तिर्नाम
चतुर्थोऽध्यायः ।



# पञ्चमोऽध्यायः

## शान्तिसन्देशः ।

प्रकृतिं प्रतिपन्नोऽथ महात्मा निर्गतो गदात् ।
सानुगैश्चैत्रमासान्ते सेवाग्रामाद् विनिर्ययौ ॥ १

अहानि कतिचिन्मोहमय्यां पुण्यपुरे तथा ।
जनायोपादिशत्कार्यं प्रकृते राजसङ्कटे ॥ २ ॥

ततश्च ग्रीष्मविश्रान्त्यै विहाराय समुद्यतः ।
महाबलेश्वरं शैलं जगामाऽऽयासवर्जितः ॥ ३ ॥

सा च शैलस्थली पूता तत्पादाम्बुजरेणुभिः ।
स्वागतं हर्षुला चक्रे शकुन्तमधुरस्वनैः ॥ ४ ॥

पश्यन् प्रकृतिसौन्दर्यं क्रीडां च मृगपक्षिणाम् ।
संलपन् कृपकैर्वन्यैरनैषीद्दिवसान् सुखम् ॥ ५ ॥

ततः पञ्चगणिक्षेत्रे कञ्चित्कालं वसन्मुनिः ।
बभूव वृत्तपत्रेभ्यो लेखने व्यापृतः सदा ॥ ६ ॥

लिखित्वांग्लभुवोर्मुख्यमन्त्रिणे चर्चिलाय सः ।
पत्रं संप्रेषयामास राजप्रतिनिधेर्गृहम् ॥ ७ ॥

किञ्चित्कालोत्तरं राज्ञो मुख्यामात्यानुमोदितः ।
प्राकाश्यमनयल्लेखमुपकर्तुं स्वदेशजान् ॥ ८ ॥

(महात्मनः पत्रम्)

"अयि प्रेमास्पदीभूतार्चिलार्य! इदं वचः ।
युष्मान् पञ्चगणीशैलादभिनन्द्य ब्रवीम्यहम् ॥ ९ ॥

श्रूयते यद्भवद्भिः प्राङ्मुग्धोऽयं नग्नभिक्षुकः ।
तमिच्छामि विनिष्पेष्टुमिति मां प्रति घोषितम् ॥ १० ॥

तां मय्यारोपितां संज्ञां मन्येऽहमतिदुर्लभाम् ।
भिक्षुकस्य पदं लब्धुं प्रयते हि मया भृशम् ॥ ११ ॥

भिक्षुको हन्त विश्वस्य जनोऽयमुपयोज्यताम् ।
आवयोर्देशसौख्यार्थं तद्द्वारा जगतस्तथा ॥ १२ ॥

अथामेरिकखण्डे सान्फ्रान्सिस्कोनाम्नि पत्तने ।
अखण्डजगतः शान्त्यै मेलनीया महासभा ॥ १३ ॥

इति दिक्षु समस्तासु लोकमुख्यैर्विनिश्चिते ।
प्रार्थितं गान्धिना कार्यत्रयं संसारशान्तये ॥ १४ ॥

यद्यखण्डजगच्छान्तिरुद्दिष्टा परमार्थतः ।
तर्हि वक्ष्यामि तत्कार्यं येन सिद्धिर्भवेद् ध्रुवम् ॥ १५ ॥

भवतु प्रथमं पूर्णस्वातन्त्र्यं भारतावनेः ।
अथ सन्धिर्विना द्वेषं तथाऽन्योन्यं विशस्तता ॥ १६ ॥

स्वातन्त्र्यं भारतस्य प्राक् ततो विश्वप्रशान्तता ।
इति विश्वपृचं सम्यग् यदुक्तं विज्ञकोटिभिः ॥ १७ ॥

विमुक्त्या भारतीयानां विश्वस्युरितरे जनाः ।
दासीकृताः समीपे नः स्वातन्त्र्यमित्यपेक्षया ॥ १८ ॥

अहिंसाधर्ममाश्रित्य चिरात्स्वातन्त्र्यलब्धये ।
प्रयस्यापूर्वसंसिद्धिं प्राप भारतभूरियम् ॥ १९ ॥

समस्तजगतः शान्तिं तस्मात्पोषयितुं क्षमा ।
इति हेतुर्द्वितीयस्तत्स्वातन्त्र्यस्य यशस्करः ॥ २० ॥

न्यायतोऽधिगता शान्तिरस्ति शान्तिर्यथार्थतः ।
न पुनर्दण्डतः सिद्धा न प्रतीकारनिश्चयात् ॥ २१ ॥

ततः सर्वैर्विभज्येत देशे शान्तिफलं समम् ।
एवमेव कृते शत्रुर्मित्रीभवति सर्वथा ॥ २२ ॥

जितारिर्निष्टसर्वस्वौ मैत्रपक्षोऽवलेपतः ।
देशौ जापानशार्म्येण्यौ कदाचिन्नावमानयेत् ॥ २३ ॥
आङ्ग्लभूश्शान्तितत्त्वानि प्रतिपद्येत चेत्तदा ।
भारतप्रातिनिध्यस्य स्वच्छन्दकरणं त्यजेत् ॥ २४ ॥
आंग्लसाम्राज्यदर्पेण प्रजासंमतिमन्तरा ।
यत्कृतं प्रातिनिध्यं तत्सर्वथा हि निरर्थकम् ॥ २५ ॥
स्वजनैः प्रातिनिध्यार्हैर्भारतेन नियोजितैः ।
भारतं व्यपदिश्येत न सम्राट्सेवकैः पुनः ॥ २६ ॥
बलवन्तो विजेतारो न भवन्ति जिघांसवः ।
शत्रुदेशेऽपि संस्थाप्य शान्तिं मित्रीभवन्ति ते ॥ २७ ॥
नायुधैः स्थापयेच्छान्तिं प्रदेशे हि निरायुधे ।
साम्ना निर्वाहयेत्सर्वान्नियमान् पुररक्षकः ॥ २८ ॥
स्वातन्त्र्यमथ सम्प्राप्य प्रभविष्यति भारतम् ।
प्रौढानां विश्वसंस्थानां स्थापने व्यापने ध्रुवम् ॥ २९ ॥
अन्यैर्देशैश्च संभूय स्वस्वातन्त्र्यप्रभावतः ।
तत्तद्राष्ट्रियकार्येषु साहाय्यं वितरिष्यति" ॥ ३० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये शान्तिसन्देशो नाम पञ्चमोऽध्यायः ।



# षष्ठोऽध्यायः
## वेवलोपन्यासः ।

अथ प्रत्याययावांल्लदेशतो वेवलः प्रभुः ।
नवोपन्यासमादाय राष्ट्रतन्त्रनिबन्धनम् ॥ १ ॥

विधित्सुः पक्षयोरैक्यं सम्राट्प्रतिनिधिस्ततः ।
उभयोर्नायकश्रेष्ठौ सिमलाद्रिं समाह्वयत् ॥ २ ॥

महात्मा तत्समाहूतो बहुमानपुरःसरम् ।
अङ्गीकृत्य समाह्वानं प्रस्थितः पुण्यपत्तनात् ॥ ३ ॥

प्राप्य मोहमयीं पुण्यां प्रार्थनोत्तरमब्रवीत् ।
"नक्राद्गजेन्द्रमोक्षस्य कथां ख्यातां पुरातनीम् ॥ ४ ॥

गजेन्द्रस्येव नोऽद्यत्वे परं दोलायते दशा ।
कथेयमुत्तमां नीतिं बोधयत्यखिलान् जनान् ॥ ५ ॥

राष्ट्रतन्त्रं समुद्दिश्य प्रदित्सुर्वेवलः प्रभुः ।
नृपादेशादुपन्यासानिति विश्रूयतेऽधुना ॥ ६ ॥

तत्प्रशंसाऽथवा निन्दा न कार्याऽस्माभिरद्य भोः ।
यतस्तन्निर्णयार्थं नः पर्याप्ता नास्ति सङ्गतिः ॥ ७ ॥

तदुपन्यासनिर्दिष्टं विमर्शार्हं न वेत्यमी ।
निर्णयन्तु यथाकालं राष्ट्रसंघाधिकारिणः ॥ ८ ॥

प्रसङ्गेऽस्मिन् परेशस्य साहाय्यं प्रार्थयामहे ।
स एव संकटेऽस्माकं सन्मार्गं दर्शयिष्यति" ॥ ९ ॥

इत्याश्वास्य वचोभिस्तान् जनान् प्रौढार्थगर्भितैः ।
प्रतस्थेऽथ तुषाराद्रिं धूमयानेन संयमी ॥ १० ॥

दृष्ट्वा राष्ट्रसभाध्यक्षं श्रीमौलानामहोदयम् ।
सम्प्राप्तं सिमलाशैले सोऽब्रवीद् वेवलं प्रभुम् ॥ ११ ॥

"राष्ट्रसंघस्य नेदानीं प्रातिनिध्यं वहाम्यहम् ।
नोपतिष्ठेयमार्यैतां सभां प्राङ् निश्चितं यथा ॥ १२ ॥

अवस्थास्ये तथाप्यत्र सभा यावत्प्रवर्तते ।
मन्त्रणाय हि सर्वेषां भक्तोऽपि यदीष्यते" ॥ १३ ॥

अनुमोद्य वचस्तस्य प्रोवाच चेवलः प्रभुः ।
आ सभाकार्यसम्पूर्तेः कृपया स्थीयतामिति ॥ १४ ॥

आहूतो मन्त्रणायासौ राजप्रतिनिधेर्गृहम् ।
ययौ स्वमन्त्रिणा प्यारेलालनाम्ना समन्वितः ॥ १५ ॥

प्राप्तमात्रो महाद्वारि प्रासादस्याभवन्मुनिः ।
जनानां शिविकारूढः सहस्रैः परिवेष्टितः ॥ १६ ॥

प्रोच्चैरुद्घोषितस्तैश्च हर्म्यं प्राविशदञ्जसा ।
तं च संभावयामास राज्ञः प्रतिनिधिर्मुदा ॥ १७ ॥

मिथः संलपतो राष्ट्रसूत्रग्रन्थिविमुक्तये ।
तयोर्होराद्वयी याता क्षणवद् वस्तुगौरवात् ॥ १८ ॥

अथ चास्तमये भानोर्निर्गच्छन् हर्म्यतो बहिः ।
महाद्वारि जनौघेन वेष्टितोऽभूत्पुनर्मुनिः ॥ १९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये चेवलोपन्यासात्मकः षष्ठोऽध्यायः ।



# सप्तमोऽध्यायः

## सिमलासंमेलनम् ।

ज्येष्ठमासावसानेऽस्यां मिलितायां च संसदि ।
स वक्तव्यप्रमेयाणि वर्णयामास वेवलः ॥ १ ॥

तानि श्रुत्वाऽवधानेन मुख्यवक्ताऽत्र मेलके ।
श्रीमानाझादमौलानः चचक्षे प्रौढवाग् यथा ॥ २ ॥

'पूर्णस्वराज्यसंप्राप्तिर्देशस्य परमा गतिः ।
इति निश्चितमेवासीत् प्रागितोऽब्दचतुष्टयात् ॥ ३ ॥

परमेभिरुपन्यासैः कोऽपि तात्कालिको विधिः ।
न ग्राह्यत्वेन निर्दिष्टो मूलोद्देशविरोधतः ॥ ४ ॥

नास्ति स्वतन्त्रतावार्ता पक्षयोरैक्यमन्तरा ।
भवदीयो विधिस्तावत्पार्थक्यमवलम्बते ॥ ५ ॥

ये तु न्यायविधायिन्याः सदस्याः सदसः कृताः ।
तत्संख्याप्यथवा जाती राष्ट्रसंघं न बाधते ॥ ६ ॥

ज्ञातुमिच्छति संघस्तु कथङ्कारं जना इमे ।
संसदि सम्प्रवेशाय प्रातिनिध्यमवाप्नुवन् ॥ ७ ॥

अतोऽपनीयतामार्या राष्ट्रसंघबहिष्कृतिः ।
मुच्यन्तां राष्ट्रनेतारस्तथाऽन्ये बन्धनादिति" ॥ ८ ॥

प्राह मुस्लिमसंघाद्ये बाह्यास्ते मुस्लिमा मया ।
यद्युच्चपदमर्हेयुर्गृह्यन्त इति वेवलः ॥ ९ ॥

तादृशान् मुस्लिमान् जिन्नो मनुते परिपन्थिनः ।
तस्मात्प्रत्यरुणत्तेषां प्रवेशं मन्त्रिमण्डले ॥ १० ॥

चत्वारिंशत्प्रतिशतं मत्संघादेव मुस्लिमाः ।
भवद्भिर्न नियुक्ताश्चेत्तटस्थो भवितास्म्यहम् ॥ ११ ॥

एवं समयबन्धेन जिन्ने प्रतिवदत्यपि ।
राजप्रतिनिधिर्दिष्ट्या वेवलोऽनान्वमोदत ॥ १२ ॥

राजसूत्रमहाग्रन्थेरुत्सुकोऽपि विमोचने ।
सद्यःसमाप्तिमनयत्समितिं वेवलः प्रभुः ॥ १३ ॥

कालः प्रतीक्ष्यतां तावदित्युक्त्वा संयमी जनान् ।
नातिहृष्टो न भग्नाशः सिमलाद्रेरवातरत् ॥ १४ ॥

अथ राष्ट्रस्य नेतारो नेहरूप्रमुखाः किल ।
वर्षद्वयेन कारासु प्रेषितास्ते पृथक् पृथक् ॥ १५ ॥

युद्धं प्रजाधिपत्याय कृतमित्यवदन् जनाः ।
स्थितः प्रतीक्षमाणोऽभूद्बन्धनात्तद्विमोचनम् ॥ १६ ॥

मोचने प्रार्थितेऽप्येषां भारतीयैः पुनः पुनः ।
शासितानेडमूकोऽसौ स्थितः साम्राज्यदर्पतः ॥ १७ ॥

प्रत्यशो विस्मृतं तेन स्वातन्त्र्याय विनिश्चिताः ।
पीडनादधिकं रुष्टा भविष्यन्ति जना इति ॥ १८ ॥

साम्राज्यस्य महामन्त्री चर्चिलाख्यः प्रहर्षुलः ।
राष्ट्रसङ्घो मृतप्रायस्तिष्ठतीति व्यचिन्तयत् ॥ १९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये सिमलासम्मेलनं नाम सप्तमोऽध्यायः ।



# सप्तमोऽध्यायः

## सिमलासंमेलनम् ।

ज्येष्ठमासावसानेऽस्यां मिलितायां च संसदि ।
स वक्तव्यप्रमेयाणि वर्णयामास वेवलः ॥ १ ॥

तानि श्रुत्वाऽवधानेन मुख्यवक्ताऽत्र मेलके ।
श्रीमानाझादमौलानः चचक्षे प्रौढवाग् यथा ॥ २ ॥

' पूर्णस्वराज्यसंप्राप्तिर्देशस्य परमा गतिः ।
इति निश्चितमेवासीत् प्रागितोऽब्दचतुष्टयात् ॥ ३ ॥

परमेभिरुपन्यासैः कोऽपि तात्कालिको विधिः ।
न ग्राह्यत्वेन निर्दिष्टो मूलोद्देशविरोधतः ॥ ४ ॥

नास्ति स्वतन्त्रतावार्ता पक्षयोरैक्यमन्तरा ।
भवदीयो विधिस्तावत्पार्थक्यमवलम्बते ॥ ५ ॥

ये तु न्यायविधायिन्याः सदस्याः सदसः कृताः ।
तत्संख्याप्यथवा जाती राष्ट्रसंघं न बाधते ॥ ६ ॥

ज्ञातुमिच्छति संघस्तु कथङ्कारं जना इमे ।
संसदि सम्प्रवेशाय प्रातिनिध्यमवाप्नुवन् ॥ ७ ॥

अतोऽपनीयतामार्या राष्ट्रसंघबहिष्कृतिः ।
मुच्यन्तां राष्ट्रनेतारस्तथाऽन्ये बन्धनादिति " ॥ ८ ॥

प्राह मुस्लिमसंघाद्ये बाह्यास्ते मुस्लिमा मया ।
यद्युच्चपदमर्हेयुर्गृह्यन्त इति वेवलः ॥ ९ ॥

तादृशान् मुस्लिमान् जिन्नो मनुते परिपन्थिनः ।
तस्मात्प्रत्यरुणत्तेषां प्रवेशं मन्त्रिमण्डले ॥ १० ॥

चत्वारिंशत्प्रतिशतं मत्संघादेव मुस्लिमाः ।
भवद्भिर्नियुक्ताश्चेत्तटस्थो भवितास्म्यहम् ॥ ११ ॥

एवं समयबन्धेन जिन्ने प्रतिवदत्यपि ।
राजप्रतिनिधिर्दिष्ट्या वेवलोऽन्वान्वमोदत ॥ १२ ॥

राजसूत्रमहाग्रन्थैरुत्सुकोऽपि विमोचने ।
सद्यःसमाप्तिमनयत्समितिं वेवलः प्रभुः ॥ १३ ॥

कालः प्रतीक्ष्यतां तावदित्युक्त्वा संयमी जनान् ।
नातिहृष्टो न भग्नाशः सिमलाद्रेरवातरत् ॥ १४ ॥

अथ राष्ट्रस्य नेतारो नेहरूप्रमुखाः किल ।
वर्षद्वयेन कारासु प्रेषितास्ते पृथक् पृथक् ॥ १५ ॥

युद्धं प्रजाधिपत्याय कृतमित्यवदन् जनाः ।
स्थितः प्रतीक्षमाणोऽभूद्बन्धनात्तद्विमोचनम् ॥ १६ ॥

मोचने प्रार्थितेऽप्येषां भारतीयैः पुनः पुनः ।
शासितानेडमूकोऽसौ स्थितः साम्राज्यदर्पतः ॥ १७ ॥

प्रायशो विस्मृतं तेन स्वातन्त्र्याय विनिश्चिताः ।
पीडनादधिकं रुष्टा भविष्यन्ति जना इति ॥ १८ ॥

साम्राज्यस्य महामन्त्री चर्चिलाख्यः प्रहर्षुलः ।
राष्ट्रसङ्घो मृतप्रायस्तिष्ठतीति व्यचिन्तयत् ॥ १९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये सिमलासम्मेलनं नाम सप्तमोऽध्यायः ।



# अष्टमोऽध्यायः

## बन्दीमोक्षः ।

प्रापदौद्योगिकः पक्षो राज्यभारमिहान्तरे ।
मन्त्रिमण्डलमप्यासीन्नूतनं परिकल्पितम् ॥ १ ॥

स्वस्वाधिकारपदवीं तत्यजुश्चर्चिलादयः ।
मन्त्रिणामभवन्मुख्यः श्रीमानाट्लीति विश्रुतः ॥ २ ॥

अथौद्योगिकपक्षीयां भवेयुरुपकारिणः ।
भारतस्येष्टसिद्ध्यर्थमित्याशास्यत सर्वतः ॥ ३ ॥

समक्षं मन्त्रिमुख्येन समालोचयितुं स्वयम् ।
स्वदेशं प्रति चक्रे श्रीवेवलश्च गतागतम् ॥ ४ ॥

अत्रान्तरे विमुच्यन्तां नेतारो बन्धनादिति ।
श्रूयते स्मान्वहं देशे भूयो भूयो जनध्वनिः ॥ ५ ॥

आंग्लामेरिकदेशेषु शुश्रुवे च प्रतिस्वनः ।
तत्तद्दैनिकपत्राणां द्वारतोऽपि दिने दिने ॥ ६ ॥

बन्धनं देशनेतॄणामिदमन्याय्यचेष्टितम् ।
अपकीर्तिकरं च स्यादित्यांग्ला विशशङ्किरे ॥ ७ ॥

अथो अमेरिकाखण्डे वर्षपट्कादितः पुरा ।
निरमाप्यणुभिर्घोरमस्त्रं वैज्ञानिकोत्तमैः ॥ ८ ॥

असंख्यद्रविणस्यासीत्तन्निर्माणे कृतो व्ययः ।
पञ्चषष्टिसहस्रैस्तन्निरमीयत शिल्पिनाम् ॥ ९ ॥

अप्यलं भविता तस्य राक्षसीयबलं क्वचित् ।
सर्वथा भस्मसात्कर्तुं जगत्कृत्स्नं क्षणादिति ॥ १० ॥

मुखेभ्यः श्रूयमाणोऽपि प्रश्नोऽयं तद्विमर्शिनाम् ।
कम्पयेत्प्रज्वलज्ज्वालाप्रसार इव कातरान् ॥ ११ ॥

अथ भाद्रपदे मासि महोत्पातकरं बत।
अभूतपूर्वमग्न्यस्त्रं नभःपृथ्व्यौ व्यघूर्णयत् ॥ १२ ॥

कुतोऽपि रभसाऽपास्तं जापानावनिमण्डले।
हिरोशीमाभिधस्याहो नगरस्यान्तरेऽपतत् ॥ १३ ॥

निमेषाद्रमणीयं तत्पत्तनं भस्मसात्कृतम्।
हरनेत्राग्निनाक्रान्तं स्मराङ्गमिव सुन्दरम् ॥ १४ ॥

योजनादधिकं दूरादमिदाहो व्यलोक्यत।
पुरी भस्मीकृता तस्थौ पार्श्वभूश्च मरुस्थली ॥ १५ ॥

जगत्यां वर्तते नान्यदस्त्रं घोरतरं क्वचित्।
प्रायो वज्रमपीन्द्रस्य ततः पर्यवहीयते ॥ १६ ॥

भावियुद्धे पुनस्तादृगस्त्रं यद्युपयुज्यते।
तदा जगद्विनाशस्य साधनं स्यादिति ध्रुवम् ॥ १७ ॥

अहो बतायुधस्यैवममोघत्वे निदर्शिते।
भविष्यत्येव लोकानामाहवेच्छाऽधिकाधिका ॥ १८ ॥

उपयुञ्जीत रक्षायै धियः पाटवमात्मनः।
त्यक्त्वा च युद्धसंकल्पं जगद्ध्वंसं निवारयेत् ॥ १९ ॥

न चिरादथ जापानदेशस्य बहुविश्रुते।
नागासाकीपुरेऽकस्मादाणवास्त्रं न्यपात्यत ॥ २० ॥

अथ गत्यन्तराभावादङ्गीकृत्य पराजयम्।
जापानीयाः स्वरक्षायै जयिनः शरणं ययुः ॥ २१ ॥

ततः सेनापतिः श्रीमान्माकार्थरसमाह्वयः।
स्वायत्तीकर्तुमारेभे जापानावनिमण्डलम् ॥ २२ ॥

तत्प्रकल्पितलेखं च स्वदेशध्वंसशंसिनम्।
राजमुद्राङ्कितं चक्रे चक्रवर्ती पराजितः ॥ २३ ॥

चतुःशतपदीसंज्ञां चतुःशतपदात्मकः ।
स लेखः प्राप शान्तिश्च सर्वतः स्थापिता पुनः ॥ २४ ॥

भूपतिः सूर्यवंशीयो हिरोहित इति श्रुतः ।
धृतदिव्याम्बरो हर्म्यान्निर्ययौ विपदाकुलः ॥ २५ ॥

भ्रातृभ्यां चक्रवर्तिन्या मन्त्रिभिश्च समन्वितः ।
टोक्योपुरस्थमोजस्वी पुण्यभूमित्रयं ययौ ॥ २६ ॥

प्रविश्यागारमेकैकं शोचनीयतमे क्षणे ।
पितॄन् संबोधयन् राजा निजगाद सगद्गदम् ॥ २७ ॥

" हन्त भोःपितरोऽद्याहं हठादरिवशीकृतः ।
राजलक्ष्म्या परित्यक्तो गतिहीनोऽस्म्यनाथवत् ॥ २८ ॥

देशः समृद्ध एवासीत्तथाप्यधिककाम्यया ।
युयुत्सुरभवल्लोको गृध्नुताऽत्र हि दोषभाक् ॥ २९ ॥

त्रिसाहस्रेण वर्षाणां जन्मभूर्या स्थिता हि नः ।
पापिना सा मयाऽरिभ्यः सम्प्रतीह समर्पिता " ॥ ३० ॥

इत्युक्त्वा निर्गतो मौनी शनैः प्रासादमात्मनः ।
पद्भ्यामेव ययौ पाण्डुवदनोऽपि समाहितः ॥ ३१ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये बन्दीमोक्षो नामाऽष्टमोऽध्यायः ।



# नवमोऽध्यायः

## हिन्दसैनिक-बधमोचनम् ।

सिमलाद्रौ समासायां सभायां वेवलः प्रभुः ।
जगामांग्लभुवं भूयो मन्त्रणायाऽऽङ्ग्लमन्त्रिभिः ॥ १ ॥

स्वराजकीयकार्येषु बहुधा व्यापृता अपि ।
स्वाण्योद्योगपक्षीयाः शशंसुः शासका यथा ॥ २ ॥

' यथाशक्ति यतिष्यन्ते अस्मत्पक्षीयमन्त्रिणः ।
प्रजानां भारतीयानामाशु स्वातन्त्र्यसिद्धये ॥ ३ ॥

विमोक्ष्यन्ति च तन्नेतृन् सानुगान् बन्धनाल्यात् ।
अपनेष्यन्ति चाह्वाय राष्ट्रसंघबहिष्कृतिम् ' ॥ ४ ॥

अत्रान्तरे समाकर्णि मृतिवार्ताऽऽकुलैर्जनैः ।
सुभाषचन्द्रवीरस्य पतनेन विमानतः ॥ ५ ॥

अदूरे किल संवृत्तमिदं टोक्योपुरोत्तमात् ।
तदीयरक्षणे यत्नो भिषजां निष्फलोऽभवत् ॥ ६ ॥

स्वातन्त्र्याय स्वदेशस्य श्राम्यन्नागतयौवनः ।
अहिंसायुधमोघत्वं प्रत्यपद्यत निश्चयात् ॥ ७ ॥

अनिवेद्य स्वबन्धुभ्यो जापानविषयं गतः ।
उपांशु न्यवसद् ध्यायन् दास्याद्देशविमोचनम् ॥ ८ ॥

कश्चित्कालमुषित्वाऽत्र जलान्तर्गामिनौकया ।
प्रतीच्यां गन्तुमारेभे जापानजनसाह्यतः ॥ ९ ॥

शार्मण्यं देशमासाद्य ज्ञात्वा तस्य परिस्थितिम् ।
जनैः परिचयं चक्रे कैश्चिदुच्चपदस्थितैः ॥ १० ॥

वधदण्डमवाप्स्यन्ति युवानोऽनपराधिनः ।
इत्यासैः शङ्कितेऽप्यत्र स्थिता धीरा निराकुलाः ॥ २३ ॥

राजप्रतिनिधिं पूज्यो गान्धिः प्रार्थितवानथ ।
दण्ड्यकूटाद्विमोच्यन्तां निर्दोषाः देशसेवकाः ॥ २४ ॥

वेवलः प्रार्थनामेतामनुमोद्य महात्मनः ।
न चिराद् चोसमित्रादीन् कांश्चिदेव व्यमोचयत् ॥ २५ ॥

श्रीदेसाईति विख्यातो सुधीरो न्यायवित्तमः ।
वादेन तरुणानन्यान्मृत्युवक्त्राद् व्यमोचयत् ॥ २६ ॥

अभिनन्दनमालाभिर्मण्डितास्तरुणा जनैः ।
स्तुतिभिर्धन्यवादैश्च पूजिताश्च प्रशासकाः ॥ २७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये हिन्द-सैनिकवधमोचनं नाम नवमोऽध्यायः ।



क्रमेण हिट्लरेणापि सत्कृतश्चाभिनन्दितः ।
संगृह्य देशजान् सर्वान् हिन्दिसेनामकल्पयत् ॥ ११ ॥

महती लालसाऽस्यासीज्जिताङ्ग्लान् सेनयाऽनया ।
निष्कास्य देशतश्चामूत्स्वराज्यं प्राप्नुयामिति ॥ १२ ॥

अतस्तन्मरणोदन्तं श्रुत्वाभूद्दुःखितो जनः ।
केचिद्विशश्वसुर्वृत्तमन्यथाऽन्ये तु मेनिरे ॥ १३ ॥

अथामेरिकदेशीयो वृत्तपत्रप्रकाशकः ।
सेलर्नामा महात्मानं विनीतो व्यलिखद्यथा ॥ १४ ॥

" मन्मुखाद् ज्ञातुमीहन्ते महात्मन् मम देशजाः ।
किं साह्यं देयमस्माभिर्युष्मत्स्वातन्त्र्यसिद्धये ॥ १५ ॥

सन्त्यत्र बहुमन्वाना युष्मदीयं मनोरथम् ।
तत्सिद्धये च साहाय्यं सर्वथा वश्चिकीर्षवः ॥ १६ ॥

तदत्र विषये श्रीमन्नादेशस्ते प्रदीयताम् ।
येन जागृतिमादध्युरमी कृच्छ्रेषु भारते " ॥ १७ ॥

( महात्मनः प्रत्युत्तरम् । )

अभीष्टसाधने यूयं साहाय्यं चेत्प्रदित्सवः ।
तद्विधेयाऽत्र युष्माभिः भूतार्थस्य प्रचारणा ॥ १८ ॥

युष्माभिः पक्षमुत्सार्य परमार्थः प्रकाश्यताम् ।
निरुध्यतां च निर्द्वेषैरसत्योक्तिप्रसारणा ॥ १९ ॥

मासद्वयाद्यो हिन्दीसेना-प्रौढाधिकारिणः ।
नीताः दिल्लीपुरे हन्त वधार्हा इव घोषिताः ॥ २० ॥

कुरुपाण्डवकालीने बृहद्दुर्गे पुरातने ।
शोणदुर्गमिति ख्याते तस्थुर्बन्दीकृता इमे ॥ २१ ॥

तेऽमी हन्त महावीरा देशभक्त्यैकपातकाः ।
राजद्रोहापराधेन शासकैरभियोजिताः ॥ २२ ॥

# दशमोऽध्यायः

## गान्धिवंगाधिप-संलापः ।

राज्यतन्त्रमथो यावद् ग्रन्थिलं पर्यवस्थितम् ।
तदन्तरे महात्माऽसौ न्यवसत्पुण्यपत्तने ॥ १ ॥

अविच्छिन्नतया ध्यायन्स्वदेशस्य परिस्थितिम् ।
परिश्रान्तोऽत्र विश्रान्तिचिकित्साया गृहं गतः ॥ २ ॥

रोगस्योपशमायैदक्संस्था स्यादुपकारिणी ।
अकिञ्चनानां लोकानामित्यसौ समचिन्तयत् ॥ ३ ॥

मन्दिरस्य बभूवास्य स्वामी म्हेताभिधो भिषक् ।
स मेने धन्यमात्मानं संसर्गेण महात्मनः ॥ ४ ॥

संस्थापयितुमिच्छन्तं संस्थां तत्सदृशीं मुनिम् ।
उवाच स्वीकुरुष्वैतां क्रियतां च यथेप्सितम् ॥ ५ ॥

इत्थमभ्यर्थितः श्रीमान् निर्यास्यन्पुण्यपत्तनात् ।
हर्षेण गान्धिराहूय नियुक्तानगदज्जनान् ॥ ६ ॥

अकिञ्चनोपयोगार्थं गृहमेतत्समर्पितम् ।
तदावश्यकमेवात्र क्रियते परिवर्तनम् ॥ ७ ॥

चिकित्स्यन्तेऽत्र मासोर्ध्वं दीना न धनिकाः पुनः ।
दीनानां परिशुश्रूषा प्रिया भवतु वः सदा ॥ ८ ॥

इत्याकर्ण्य वचः सर्वं तथेत्येतैः प्रतिश्रुते ।
गान्धिः सूक्ष्मदृशा पश्यन् पर्यटद् रुग्णमन्दिरे ॥ ९ ॥

सहते न हि मालिन्यं नैतिकं वापि भौतिकम् ।
इति सम्यक्परिज्ञातमासीद् रुग्णनिकेतने ॥ १० ॥

आसीत्केसीति विख्यातो वङ्गानां शासकप्रभुः ।
सोऽन्तरङ्गकथालापं चिकीर्षुर्गान्धिमाह्वयत् ॥ ११ ॥

स च पुण्यपुरादाशु प्रतस्थे नरपुङ्गवः ।
देशस्य शुभमाशंसुर्मन्त्रणेनाधिकारिणा ॥ १२ ॥

कल्कत्तानगरं यास्यन् ददर्श पथि संयमी ।
जनौघेनाऽऽकुलं सर्वं लोहमार्गनिवेशनम् ॥ १३ ॥

सहस्रशः समाजग्मुः पुरुषार्भकयोषितः ।
नानादिग्देशतोऽप्याराात्तत्संदर्शनलालसाः ॥ १४ ॥

जयशब्दैर्महात्मानमुद्घोष्य समुदैरयन् ।
जय हिन्द जयहिन्देति दिल्लीं प्रचलिता वयम् ॥ १५ ॥

इति कण्ठीरवाध्वानविडम्बी तज्जयध्वनिः ।
सर्वतो रोदसी व्याप्य प्रतिध्वनिमजीजनत् ॥ १६ ॥

आ सायंप्रातरारभ्य घोषणां तां मुहुर्मुहुः ।
शृण्वन् गान्धिः परिश्रान्तः शयालुरभवन्निशि ॥ १७ ॥

निद्राणेऽथ सुखं तस्मिन् शब्दं मन्दीकरिष्णवः ।
गवाक्षान् पिदधुर्यानप्रकोष्ठस्य सहानुगाः ॥ १८ ॥

आनिशीथं तथाप्यासुर्लोहाध्वसदने जनाः ।
देहि दर्शनमित्युच्चैः प्रार्थयन्त मुहुर्मुहुः ॥ १९ ॥

जातोत्साहपराकाष्ठः संमर्दोऽभून्निरङ्कुशः ।
हा स्वयंसेवकोऽप्येको मूर्च्छितोऽभून्निवारयन् ॥ २० ॥

गान्धिस्तोपाय लोकानामादिदेशानुयायिनः ।
एकमेव गवाक्षं भोः क्षिप्रमुद्घाट्यतामिति ॥ २१ ॥

कन्याहस्तस्तदा लोकान् दर्शनेनाभ्यनन्दयत् ।
तेभ्यो हरिजनायार्थं प्रतिजग्राह चादरात् ॥ २२ ॥

साक्षाद्भागवतीं मूर्तिं मन्यमानो जनश्च तम् ।
कन्यायां न्यक्षिपद् द्रव्यं स्पर्धमानः परस्परम् ॥ २३ ॥

कष्टेनात्रोपसर्पन्ती वृद्धा काचिदकिञ्चना ।
प्रणिपत्य महात्मानमाणकद्वयमार्पयत् ॥ २४ ॥

धूमयानं यदा प्रातर्गोण्डाख्ये व्यरमत्पुरे ।
श्रेष्ठी कश्चिदुपानैषीन्मुनये रूप्यभाजनम् ॥ २५ ॥

तच्च गान्धिर्निचिक्षेप सार्वलौकिकविक्रये ।
रूप्यकाणां धनी कश्चित्क्रीत्वा सार्धशतेन तत् ॥ २६ ॥

आर्पयन्मुनये पात्रं व्यक्रीणीत स तत्पुनः ।
इत्थं पञ्च सहस्राणि रूप्यकाणामवाप सः ॥ २७ ॥

दिष्ट्या हरिजनद्रव्यमारभ्य ग्रामनिर्गमात् ।
रूप्यकाणामगाद्वृद्धिं सहस्रैः सार्धसप्तभिः ॥ २८ ॥

कल्कत्तानगरात्सार्धक्रोशद्वयविदूरतः ।
ग्रामे शुद्धपुराभिख्ये पुराऽभूदाश्रमो महान् ॥ २९ ॥

सोऽभवत्पावितो गान्धेश्चरणाम्बुजरेणुभिः ।
मेने च धन्यमात्मानमाश्रमस्थोऽखिलो जनः ॥ ३० ॥

यन्त्रयानं समारूढस्स्वराज्यध्वजमण्डितम् ।
हर्म्यं वङ्गाधिपस्यागान्महात्मा दीनवत्सलः ॥ ३१ ॥

बन्धनाद्वङ्गदेश्यानां चिरात्कारानिवासिनाम् ।
तौ विमोचनमुद्दिश्य चक्रतुर्मन्त्रणं मिथः ॥ ३२ ॥

प्रासे मन्त्रयतोरेवमग्रिमे सोमवासरे ।
मुनिर्मौनी लिखन्पत्रे प्रश्नानामुत्तराण्यदात् ॥ ३३ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य-विजये गान्धिवंगाधिपसंलापो नाम दशमोऽध्यायः ।



# एकादशोऽध्यायः

## आन्ध्रुस्मारकस्थापनम् ।

बाणाब्धिग्रहचन्द्राङ्कवत्सरे मासि चान्तिमे ।
राष्ट्रकार्यस्य नेतॄणां समित्यैवं प्रकाशितम् ॥ १ ॥

शतकार्धाधिकाद्राष्ट्रसंघः स्वातन्त्र्यलालसः ।
प्रयस्यतितरां भङ्क्तुं मातृभूदास्यशृङ्खलाम् ॥ २ ॥

बलवान् लब्धवर्णश्च राष्ट्रसंघोऽद्य तिष्ठति ।
स्वातन्त्र्यस्य जनुर्भूमेरिव मूर्तिः सचेतना ॥ ३ ॥

स्वातन्त्र्यसंगरेऽस्माकमसंख्यवनितानरैः ।
तत्पताकं समाश्रित्य सोढा क्लेशपरम्परा ॥ ४ ॥

अहिंसैकायुधो राष्ट्रसंघो जित्वा विरोधिनः ।
सम्प्राप्तापूर्वसामर्थ्यो जगत्यां बहुमानितः ॥ ५ ॥

भारतस्य जनः सर्वः स्वमतं वक्तुमीश्वरः ।
तथा साम्ना समुद्दिश्य सभाः कर्तुं निरायुधः ॥ ६ ॥

न्यायदृष्ट्या समाः सर्वाः प्रजाः सन्तीह भारते ।
न जातिर्न मतं धर्मो न वा लिंगं हि गण्यते ॥ ७ ॥

वापीकूपतटाकादौ सर्वगम्यस्थलेषु च ।
पुरद्रव्येऽपि पौराणामधिकारः समो भवेत् ॥ ८ ॥

यत्र क्वापि प्रजा देशे स्थातुं च चरितुं क्षमाः ।
यथेष्टं चानुवर्तेरन्वृत्तीस्तदपि ताः समाः ॥ ९ ॥

गते सार्धशतेऽब्दानां निरुद्धः परशासकैः ।
देशस्याभ्युदयोऽस्माकं जनितं चातिसङ्कटम् ॥ १० ॥

आस्ते भारतभूरद्य पराधीना न केवलम् ।
अपि त्वधोगतिं नीता धर्मविद्यार्थसंग्रहे ॥ ११ ॥

---

* १९४५ खिस्ताब्दे

स्वार्थैकपरवृत्तीनां शासकानामतिक्रमैः ।
देशे समजनि क्षामडमरव्याधिसङ्कटम् ॥ १२ ॥

नास्त्युपायो विपज्जालाद्विमुक्तेर्द्वयमन्तरा ।
तद्दास्यशृङ्खलाच्छेदः स्वातन्त्र्याधिगमस्तथा ॥ १३ ॥

उपायः प्रथमं चिन्त्यो देशदारिद्र्यशान्तये ।
जनताजीवनौदार्यसिद्ध्ये चाविलम्बतः ॥ १४ ॥

चिकीर्षुरथ कल्याणं जनताया विशेषतः ।
तदभ्युदयकार्येषु राष्ट्रसंघस्सदोद्यतः ॥ १५ ॥

तदुद्यमेषु विघ्नश्चेदापतेदन्तरान्तरा ।
तदा स शीघ्रमुत्सार्य इति संघस्य निर्णयः ॥ १६ ॥

तस्मात्प्रार्थयते संघो मतदानाधिकारिणः ।
आगामिवरणे दद्युः संघाय स्वमतं ध्रुवम् ॥ १७ ॥

भारतीयैः प्रतिज्ञा प्राक् कृता स्वातन्त्र्यलब्धये ।
सा च निस्तरणीयेति स्मरणीयं हि कारणम् ॥ १८ ॥

इदं वरणमस्माकमाद्यं लघुपरीक्षणम् ।
अग्रे महार्थलाभाय सज्जीकरणसम्भ्रमः ॥ १९ ॥

स्वातन्त्र्यलालसाः सर्वे श्रद्धावीर्ययुता वयम् ।
उत्तीर्णवरणा यामः सह निर्मुक्तभारतम् ॥ २० ॥

उद्योगपक्षनेताभूच्छ्रीमान्लास्कीति विश्रुतः ।
स च क्वचिन्महागोष्ठ्यामकरोद्भाषणं यथा ॥ २१ ॥

"अलं भारतमूद्य निर्वोढुं निजशासनम् ।
प्रान्तीयवरणं तस्मात्क्षिप्रमेव प्रवर्तताम् ॥ २२ ॥

राजप्रतिनिधेः कार्यनिर्वाहकसभा ततः ।
देशजैरेव संयुक्ता प्रायः कर्तुं हि शक्यते ॥ २३ ॥

प्रजाधिपत्यरक्षार्थे प्रवृत्ताः समरे वयम् ।
भारतस्य महायोधाश्चक्रुः साहाय्यमाहवे ॥ २४ ॥

कैश्चित्प्राणव्ययेनापि वीरैर्युद्ध्वा रणाङ्गणे ।
अपूर्वजयसंसिध्द्यै कृतं साहायकं महत् ॥ २५ ॥

जनसत्ताकराज्यार्थं संपरायः प्रचालितः ।
इत्येतत्कृतमस्माभिः सर्वथैव स्फुटं भुवि ॥ २६ ॥

तथापि भारतीयास्ते स्वातन्त्र्येप्सापराधिनः ।
बद्धाश्च ताडिताश्चेति न चिन्त्यं मनसापि नः " ॥ २७ ॥

अथ पूर्वोक्तवर्षान्त्यमासस्यैकोनविंशके ।
प्रतस्थे दिवसे श्रीमान् गांधिः शान्तिनिकेतनम् ॥ २८ ॥

आसीत्तत्र जनै'रान्ड्यो'विदुषः स्मृतिकारकम् ।
रुग्णगेहं विनिर्मेयमिति प्रागेव निश्चितम् ॥ २९ ॥

वास्तुकर्म महात्माऽसौ कर्तुमाकारितो ययौ ।
तत्प्रसङ्गादुपाजग्मुः कल्कत्तानगराज्जनाः ॥ ३० ॥

श्रीमानान्ड्युर्हि सर्वत्र दीनबन्धुरिति श्रुतः ।
प्रकृत्या ग्रामलोकानामुपकारी विशेषतः ॥ ३१ ॥

अतो ग्रामान्तरायातो जनस्तोमो महानभूत् ।
प्राह सर्वान्महात्मैवं भगवत्प्रार्थनोत्तरम् ॥ ३२ ॥

बभूव गुरुदेवोऽत्र द्विजराजः सुपक्षवान् ।
वेगात्तुङ्गपदारोही स्वपक्षाश्रितरक्षकः ॥ ३३ ॥

काव्यरत्नैः कवेर्गीतैः सदुद्योगान्तरैस्तथा ।
भारतस्य प्रतिष्ठा हि स्थापिताऽस्ति जगत्तले ॥ ३४ ॥

स च सर्वो निधिस्तेन स्वदेशाय समर्पितः ।
कृतज्ञैश्च विनीतैश्च प्रतिग्राह्योऽस्ति नः सदा ॥ ३५ ॥

द्विजेन्दोर्गुरुदेवस्य सुपक्षेणाभिरक्षणम् ।
न पुनर्लभ्यमस्माकमिति दोदूयते मनः ॥ ३६ ॥

भाव्यं तदात्मनात्रैव प्रशान्तेनाश्रमे क्वचित् ।
इति मे हृदये भूयो भूयः स्फुरति भावना ॥ ३७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य-विजये आन्ध्रस्मारक-
स्थापनं नाम एकादशोऽध्यायः ।



# द्वादशोऽध्यायः

## आन्ध्रुस्तवनम् ।

वास्तुमूलाश्मविन्यासं स्मारकं स्वसुहृन्मणेः ।
स्वयं विधाय संतुष्टो महात्मा पुनरब्रवीत् ॥ १ ॥

" दीनबन्धोर्ममाप्यन्तःप्ररूढा प्रेमवल्लरी ।
देशसेवारसासेकैर्वर्धते स्म निरन्तरम् ॥ २ ॥

दीनैर्निर्मातुमिष्टस्य तत्स्मृत्यै रुग्णवेश्मनः ।
मया मूलशिलाबन्धः कृतोऽद्य प्रीतचेतसा " ॥ ३ ॥

इति संक्षिप्तमाख्याय न्यवर्तत मुनिस्ततः ।
क्रोशदूरे च पादाभ्यां कुटीरं प्राप लीलया ॥ ४ ॥

पत्रे हरिजने श्रीमानलिखद्गान्धिरेकदा ।
पुरुषायुषमुद्दिश्य व्यञ्जयन् स्वमतं यथा ॥ ५ ॥

" अब्दाञ्जीवितुमिच्छामि शतोर्ध्वं पञ्चविंशतिम् ।
न हि मेऽजनि कामोऽयं विना सूक्ष्मविवेचनम् ॥ ६ ॥

पवित्रोपनिषन्मन्त्रान् परिशीलयतो मम ।
दीर्घायुः प्राप्त्युपायानां रहस्यं बुद्धिमागमत् ॥ ७ ॥

तत्रैको मन्त्र आख्याति यदायुः स्पृहयेन्नरः ।
निष्कामसेवया जीवेच्छतं मर्त्यः समा इति ॥ ८ ॥

सपादशतसंख्या हि शतेनाप्युपदिश्यते ।
षोडशेनापि मद्रेषु मन्ये संख्याप्यते शतम् ॥ ९ ॥

तत्रैको रूप्यकाणां मे शतं दत्तमिति ब्रुवन् ।
ऋजुः समार्पयद्द्रव्यं तदासीत् षोडशाधिकम् ॥ १० ॥

निष्कामा लोकशुश्रूषा न कर्मफलमीक्षते ।
तादृक्सेवामकुर्वन्न कामयेत शतं समाः ॥ ११ ॥

सपादशतमब्दानां जीवितुं न हि पारयेत् ।
मनुष्यो विषयासक्त इति मे नास्ति संशयः ॥ १२ ॥

यस्तु स्वार्थैकवृत्तिः संश्चिरं मर्त्यो जिजीविषेत् ।
जीवन्मृत इति ज्ञेयो भुवो भारः स केवलम् ॥ १३ ॥

सत्येवं जगदीशं स प्रार्थयेतैकनिष्ठया ।
विमुक्तिं जीवनात्सद्यो नायतिं तु निजायुषः ॥ १४ ॥

वपुर्नृणां हि सेवार्थं न तु सौख्योपभुक्तये ।
सुखं सञ्जायते त्यागात् त्याग एव हि जीवितम् ॥ १५ ॥

अनादृतफलाकाङ्क्षी परसेवापरायणः ।
सपादशतमब्दानां नरो जीवितुमर्हति ॥ १६ ॥

निःशेषजीवने तादृग् अर्पयेद्दीनसेवने ।
त्यागस्यास्य सुखं कोऽपि परिहर्तुं न पारयेत् ॥ १७ ॥

हृदन्तस्सुखमुद्भूतं त्यागात्पुष्णाति जीवितम् ।
त्याग एव हि जीवातुस्तं विनाऽऽयुर्निरर्थकम् " ॥ १८ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये
आन्ध्रस्तवनं नाम द्वादशोऽध्यायः ।



# त्रयोदशोऽध्यायः

## छात्रसंदेशः ।

रसाब्धिखेचरक्ष्माङ्के वत्सरे यन्महात्मनः ।
बभूव चरिते वृत्तं तदाचक्षे यथाक्रमम् ॥ १ ॥

ख्रिस्तसंवत्सरारम्भे मृत्युवक्त्राद्विमोचिताः ।
सुभाषचन्द्रसेनाया नैकराष्ट्रीयसैनिकाः ॥ २ ॥

श्रीदेसाईति विख्यातो न्यायवित् तान् यशस्विनः ।
सुवादेन वधस्तम्मादरक्षद्देशवत्सलान् ॥ ३ ॥

भारते सर्वतश्चापि हिन्दिसैनिकरक्षणात् ।
प्रहृष्टैर्विहिता गोष्ठ्यो लोकैस्तानभिनन्दितुम् ॥ ४ ॥

मृत्युवक्त्रादसौ धीमान्बन्दीनां परिरक्षकः ।
श्रीदेसाईमहाभागः सत्कृतोऽभून्महाजनैः ॥ ५ ॥

प्राह न्यायपटुः सायं मोहमय्यां सभाजनान् ।
स्वराज्यद्वारि सम्प्राप्ता वयमद्येति निश्चितम् ॥ ६ ॥

व्यवहारोऽयमन्याय्यः परिहासकरः परम् ।
इत्यनेकैरभिप्रेतमांग्लैर्निष्पक्षपातिभिः ॥ ७ ॥

अथ प्रयातुमुद्युक्तो विदर्भान् प्रति सत्वरम् ।
छात्रवर्गमुपादिक्षत्कल्कत्तानगरे मुनिः ॥ ८ ॥

( महात्मनः सन्देशः । )

" श्रूयतां मद्वचस्तावदयि विद्यार्थिनः प्रियाः ।
राजकीयविवादेभ्यो दूरतः स्थीयतां सदा ॥ ९ ॥

विद्यार्थी नानुकुर्वीत निजोद्योगपराङ्मुखान् ।
विना हेतुविशेषेण स्वाध्यायं न परित्यजेत् ॥ १० ॥

---

* १९४६ ख्रिस्ताब्दे

प्रेषितेषु वधस्तम्भं धीरेष्वनपराधिषु ।
दैनिकाध्ययनोद्योगाद् विरमेदनुकम्पया ॥ ११ ॥

धार्यं विद्यार्थिभिर्वासः खद्दरं ग्रामनिर्मितम् ।
क्रेतव्यं न विदेशीयं वस्त्रं वा वस्तु वाऽपरम् ॥ १२ ॥

विद्यार्थी प्रत्यहं कुर्याद्यज्ञवत्तन्तुनिर्मितिम् ।
तन्तुचक्रमपि स्वच्छं 'स्थापयेत्' सुव्यवस्थितम् ॥ १३ ॥

न बलाद्ग्राहयेद्दन्यान् विमुखान् राष्ट्रकेतनम् ।
वन्दे मातरमित्याद्यां राष्ट्रीयां गीतिकामपि ॥ १४ ॥

राष्ट्रध्वजस्य संदेशं विद्यार्थी पालयेत्स्वयम् ।
अस्पृश्यत्वं न वा जातिभेदं जातु विभावयेत् ॥ १५ ॥

सहविद्यार्थिभिः सख्यं कुर्यादन्यमताश्रितैः ।
तथा हरिजनैर्नान्यान् हठादेवं तु कारयेत् ॥ १६ ॥

साहाय्यं वितरेन्नित्यं क्षताङ्गप्रतिवेशिनाम् ।
कुर्यात्संमार्जनं पार्श्वग्रामेषु प्रतिवासरम् ॥ १७ ॥

ग्रामस्यारोग्यरक्षार्थं शुचित्वकलनास्वपि ।
बालाः वृद्धाश्च ग्रामीणा योजनीयाः प्रयत्नतः ॥ १८ ॥

राष्ट्रभाषामधीयीत हिन्दुस्थानीति विश्रुताम्
यत्नेन करणीयश्च तत्प्रसारोऽपि सर्वतः ॥ १९ ॥

पठन् प्राप्य नवोदन्तं स्ववाचा परिवर्तयेत् ।
क्रमात्तदनुवादं च ग्रामे ग्रामे प्रसारयेत् ॥ २० ॥

संयमेनात्मनः कुर्यादगुप्तं शुचि जीवनम् ।
भयं निरस्य संरक्षेद्दुर्बलान्सहपाठिनः ॥ २१ ॥

अवसानोन्मुखे युद्धे विहायाध्ययनाळयम् ।
भवेदुद्योगवानाशु जन्मभूमेर्विमुक्तये ॥ २२ ॥

याः स्त्रियः सहपाठिन्यस्तासु निर्दोषमाचरेत् ।
प्रसङ्गे सति रक्षेत्ताः सर्वदा मानयेदपि ॥ २३ ॥
न वाच्यमुक्तकर्माणि कर्तुं नावसरोऽस्ति नः ।
जाने कालव्ययो व्यर्थो युष्माभिः क्रियतेऽलसैः " ॥ २४ ॥
अथ प्रस्थानतः पूर्वं प्रति मद्रपुरं यतिः ।
जगाम प्रेक्षितुं बन्दीर्बद्धाः कारासु शासकैः ॥ २५ ॥
अहिंसाश्रेष्ठतामुक्त्वा धीरान्कारालयस्थितान् ।
तदात्वे मिलितामेकां ययौ शुद्धपुरे सभाम् ॥ २६ ॥
भाषणानि बहून्याङ्ग्लभाषया चक्रिरे जनैः ।
श्रुत्वोवाच महात्मैतानांग्लगीस्त्यज्यतामितः ॥ २७ ॥
मदग्रे यदि वः किञ्चिद्वक्तुमिच्छा भवेत्तदा ।
उच्यतां हिन्दिवाचा वा नोचेत्तैलिङ्गभाषया ॥ २८ ॥
अथासीद्गच्छतो मार्गे विशाखानगरे सभा ।
सत्कर्तुमेतं महती स च तत्राब्रवीज्जनान् ॥ २९ ॥
"स्वराज्यप्राप्तये नूनं देशस्यावश्यकं त्रयम् ।
पूर्वमस्पृश्यताव्याधेर्निर्मूलनमशेषतः ॥ ३० ॥
द्वितीयं सर्वजातीनामैकमत्येन वर्तनम् ।
तृतीयमादिवासिभ्यः समभोगाधिकारिता ॥ ३१ ॥
ऐन्द्रजालिक्युक्त्या चेत्स्वराज्यश्रीः समेष्यति ।
अस्थिरां हि तदा नैतां शक्नुमः परिरक्षितुम् ॥ ३२ ॥
सत्येनाहिंसनेनैव प्राप्स्यामस्तद् वयं ध्रुवम् ।
इति युष्माभिरुद्घुष्टं किल प्राग्वर्षविंशतेः " ॥ ३३ ॥
एवं स्मारयति प्राज्ञे तथा तात तथेति वाक् ।
उच्चैरश्रावि लोकानां दूराच्चास्याः प्रतिध्वनिः ॥ ३४ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य-विजये छात्रसंदेशो नाम
त्रयोदशोऽध्यायः ।

# चतुर्दशोऽध्यायः

## हरिजनशिक्षावेश्मोद्घाटनम् ।

ययौ मद्रपुरं काचिद्गान्धिना सह गच्छता ।
आंग्लयोषिद्[+]गाथाख्या हारिसन्नाख्यवंशजा ॥ १ ॥

मार्गेऽस्य कठकेङ्कूरबलरामपुरादिषु ।
संनिपेतुर्जनास्तत्तल्लोहमार्गनिवेशने ॥ २ ॥

ददुर्हरिजनस्यार्थे केचिद्द्रव्यं महात्मने ।
केचिदाभरणान्यन्ये मुक्तहस्तं समार्पयन् ॥ ३ ॥

सौवर्णकङ्कणे काचिद् व्यतरद्वनिता मुदा ।
रत्नच्छुरितकेयूरमपरा प्रत्यदापयत् ॥ ४ ॥

कृत्वा प्रावरणं सूक्ष्मैः स्वयं निर्मिततन्तुभिः ।
काचिदग्रे न्यधादस्य प्रणता पादपद्मयोः ॥ ५ ॥

चेजवाडाद्ययोर्मार्गगृहेष्वेवं दिदृक्षुभिः ।
लोकैस्तारस्वनैरासीत्सकल्लोलो जनार्णवः ॥ ६ ॥

धूमयानप्रकोष्ठस्य द्वारि तिष्ठन् स्मिताननः ।
आददेऽनेकसंस्थाभ्यः स्वागतोक्तीर्धनानि च ॥ ७ ॥

नादसंवर्धिनीद्वारा तत्संदेशः स्थले स्थले ।
तैलिङ्गभाषयाऽपाठि जनान् प्रोत्साहयन् यथा ॥ ८ ॥

अयि भो देशसंवृध्यै स्वराज्यप्राप्तये तथा ।
नित्यं नैर्माणिकोद्योगक्रमः सोऽनुविधीयताम् ॥ ९ ॥

अथ सा विस्मितांग्लेयी जगादेत्थं सहाध्वगा ।
“ न कदापि मयैतावाञ्जनस्तोमोऽवलोकितः ॥ १० ॥

---

+ Agatha Harrison

'नायको न हि कोप्यन्यो विद्यते जगतीतले ।'
प्रेम्णा यस्य वशीभूता लोकाः स्युरनुयायिनः ॥ ११ ॥

युद्धान्ते गान्धिसाहाय्यं भवेदावश्यकं हि नः ।
प्रशमाय विवादानां 'शान्तिसंस्थापनाय' च" ॥ १२ ॥

अथ मद्रपुरं प्राप्तः प्रदोषप्रार्थनोत्तरम् ।
हिन्दिप्रसारसदसो भवनस्यान्तिकाङ्गणे ॥ १३ ॥

अग्रे जनसहस्राणां प्रार्थनाया जगत्पतेः ।
महिमानं समुद्दिश्य बभाषे हिन्दिभाषया ॥ १४ ॥

( महात्मोवाच । )

"अयि भोः सर्वकार्येषु मानवस्यास्ति जीवने ।
कार्यं मुख्यतमं नित्यं प्रार्थना जगदीशितुः ॥ १५ ॥

हिन्दुर्वा पारसी क्रैस्तः सिक्खो वा मुस्लिमो ऽपि वा ।
प्रार्थनायाः स्वकर्तव्यं चिन्तयेज्जीविताधिकम् ॥ १६ ॥

बहून्यहानि हित्वाऽन्नं नरः शक्नोति जीवितुम् ।
भगवत्प्रार्थनां हित्वा दुर्भरं तस्य जीवितम् ॥ १७ ॥

प्रतिज्ञा क्रियतां कर्तुं हिन्दिवाचैव भाषणम् ।
गरीयस्तदिदं कार्यं भवेत्सत्याग्रहादपि ॥ १८ ॥

अपरं कथये सौम्या नास्ति धर्मे सनातने ।
अस्पृश्यत्वाग्रहादन्यत्पातकं हि महत्तरम्" ॥ १९ ॥

सौमनस्यसमाजोऽथ प्रापदाङ्ग्लेयदेशतः ।
तेन संभाषणं चक्रे महात्मा दृढनिश्चयः ॥ २० ॥

( महात्मोवाच )

"भारताङ्ग्लभुवोर्मध्ये सौहार्दं परिरक्षितुम् ।
स्वातन्त्र्यं भारतीयानां पूर्णमुद्घोषयेन्नृपः ॥ २१ ॥

विलम्बेन भविष्यन्ति प्रकृतार्थाः समाकुलाः ।
सुमनस्कत्वसौहार्दे देशयोश्च विनङ्क्ष्यतः ॥ २२ ॥

भारतायाऽऽङ्ग्लराजेन स्वातन्त्र्यस्योपपादनम् ।
तुल्यायैव हि तुल्येन नावराय वरीयसा ॥ २३ ॥

घोषणा यदि पूर्वोक्ता शीघ्रमेव विधीयते ।
× राजाङ्गविधिनिर्माणगोष्ठी च स्थाप्यते नवा ॥ २४ ॥

आंग्लदेशस्य संकल्पस्तदा लोकैः प्रतीयते ।
परमार्थोऽयमित्येषां श्रद्धा च भविता तदा " ॥ २५ ॥

श्रुत्वेदं नायकस्तस्य समाजस्याब्रवीन्मुनिः ।
मद्वचः श्रूयतामार्याः प्रतिजाने दृढं हि वः ॥ २६ ॥

" स्वात्मलभ्यं स्वयं युष्मद्देश एव प्रसाधयेत् ।
यत्तेन निर्मितं तन्त्रमादर्शो जगते भवेत् ॥ २७ ॥

स्वातन्त्र्यं भारतीयानां भविता श्रेयसे भुवः ।
यल्लभ्यस्तु परस्येष्टे तस्यात्मा न हि विद्यते ॥ २८ ॥ "

अथैकस्मिन् पुरे त्यागराजनाडिति विश्रुते ।
आसीद्धरिजनोद्योगशिक्षावेश्म चिकीर्षितम् ॥ २९ ॥

तस्य मूलेष्टिकान्यासं कर्तुमामन्त्रितो मुनिः ।
स्थापयामास हस्तेन चेष्टिकाः पञ्चपास्ततः ॥ ३० ॥

निदधे प्रहसन्नुच्चैरेकैकां सुव्यवस्थिताम् ।
लोकानां समवेतानां विनोदाय महीयसे ॥ ३१ ॥

अथ मद्रपुरे गान्धिः सभां कर्मकृतां गतः ।
लोकानामर्धलक्षस्य पुरस्तादब्रवीद्यथा ॥ ३२ ॥

---

× Constituent Assembly

'काले कर्मकरोऽप्येको वृतो योग्यतया जनैः ।
भूयाद्राष्ट्रसभाध्यक्ष इत्याशासे विचिन्तयन् ॥ ३३ ॥

अद्भुतं किं सभाध्यक्षो भवेत्कर्मकरोऽपि चेत् ।
आंग्लभाषापरिज्ञानं नापेक्ष्यं तत्पदाप्तये ॥ ३४ ॥

यद्यप्याङ्ग्लवचोऽभिज्ञः श्रीमौलानामहोदयः ।
हिन्दुस्थानीवचो हित्वा भाषते नान्यभाषया ॥ ३५ ॥

राज्ञः प्रतिनिधिं याति सोऽनुवादकृदन्वितः ।
तद्द्वारा कुरुते सर्वं व्यवहारं च लीलया ॥ ३६ ॥

अस्ति भारतभूः कृत्स्ना नूनमेकैव वस्तुतः ।
तथा समष्टिभावेन समाः कर्मकरा अपि ॥ ३७ ॥

कृषकः श्राम्यति क्षेत्रे वाहकस्तु यतस्ततः ।
इति वैयक्तिको भेदः परं कर्मकरावुभौ ॥ ३८ ॥

शिल्पयन्त्रालयेऽन्यस्य यः श्राम्यति दिवानिशम् ।
स एव वस्तुतः स्वामी नेतरस्तेन रक्षितः ॥ ३९ ॥

सर्वकर्मकरैर्भाव्यं सत्यशीलैः सुशिक्षितैः ।
प्रशान्तमानसैश्चापि स्वकार्यपरिनिष्ठितैः ॥ ४० ॥

हिन्दुस्थानीवचोऽधीष्वं येनेदं भाषणं मम ।
सर्वेषां स्यात्सुबोधाय युष्माकं मद्रवासिनाम् ॥ ४१ ॥

मिलितेष्वत्र युष्मासु कति सन्ति कलाविदः ।'
इति श्रुत्वोर्ध्वहस्तानां महात्मा पुनरब्रवीत् ॥ ४२ ॥

'कला हि जीवनं सत्याहिंसनाभ्यां पुरस्कृतम् ।
अनेकवर्षैरेतैरभ्यस्ता सा कला मया ॥ ४३ ॥

एतावत्स्वपि युष्मासु कलावित्सु कथं बत ।
स्वराज्यद्वारमद्यापि न प्राप्ता भारतावनिः ॥ ४४ ॥

कला स्वराज्यसम्प्राप्तेः कलानां महती कला ।
सत्याहिंसनयोर्द्वारा सा ध्रुवं सिद्धिमेष्यति' ॥ ४५ ॥

सर्वतो राष्ट्रसंघस्य प्रान्तीयवरणे जयम् ।
अवलोक्यांग्लसौहार्दमण्डलप्रमुखोऽब्रवीत् ॥ ४६ ॥

'सार्धैकमासमत्रस्थैः प्रान्तीयवरणेक्षकैः ।
आसेतोरातुपाराद्रिं सर्वपक्षावलम्बिनः ॥ ४७ ॥

त्यज भारतमित्येतां घोषणामैकमत्यतः ।
पुरस्कुर्वन्ति सर्वेऽपीत्यस्माभिरवलोकितम् ॥ ४८ ॥

सन्ति भिन्नमताः पक्ष्यास्तथापि निखिला अमी ।
स्वातन्त्र्यसुखमासाद्य संयुज्यन्ते न संशयः' ॥ ४९ ॥

अथ मद्रपुरात्पुण्यव्रतः पुण्यपुरीं ययौ ।
विविक्तमागाखानेन श्रीमता मन्त्रणाय सः ॥ ५० ॥

उपायमैकमत्याय हिन्दुमुस्लिमपक्षयोः ।
समालोचयतामार्यौ संलपन्तौ निराकुलम् ॥ ५१ ॥

अथाऽऽगाखानगेहस्य महात्मा विधिनाऽङ्गणे ।
समाधिं कस्तुराम्बाया महादेवस्य चातनोत् ॥ ५२ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य-विजये हरिजनशिक्षावेश्मोद्घाटनं नाम चतुर्दशोऽध्यायः ।



# पञ्चदशोऽध्यायः

## नाविक-कार्यनिग्रहः ।

अथाऽऽकाशगिरा चक्रे नवोदन्तस्य घोषणां ।
यथाऽऽङ्ग्लदेशतो मन्त्रित्रयं भारतमेष्यति ॥ १ ॥

रैंसाब्धिग्रहचन्द्राङ्कवत्सरे मासि चाऽऽदिमे ।
सन्धिलेखं समादाय पश्चाद्विज्ञेयविस्तरम् ॥ २ ॥

तैः स्वाराज्योपहारोऽपि प्रायो देशाय दास्यते ।
सन्धिरार्थिकवाणिज्यव्यवहाराय कल्प्स्यते ॥ ३ ॥

स च हस्ताक्षरैरङ्क्यो गान्धिप्रमुखनेतृभिः ।
तथा मुस्लिमसंघेन श्रेयः प्राप्तुमभीप्सुभिः ॥ ४ ॥

श्रीमान्हरिजने पत्रे व्यलिखद्गान्धिरेकदा ।
लेखं पाठकबोधाय निजानुभवशंसिनम् ॥ ५ ॥

तथाहि 'नास्ति मे श्रद्धा वचनेष्वधिकारिणाम्' ।
इति मद्वचसा कश्चित्सुहृद्योत्साहितोऽलिखत् ॥ ६ ॥

संगवानप्यहं मन्ये श्रीमन्नात्मानमेककम् ।
इत्येवं भावयन्तं मे लेखो विस्मापयेदमुम् ॥ ७ ॥

नात्मानं चिन्तयेद्भक्तः कदाप्येकाकिनं खलु ।
परमात्मा स्वभक्तस्य सदा जागर्ति संनिधौ ॥ ८ ॥

एवं सति कुतश्चिन्ता त्यक्तस्याप्यखिलैर्जनैः ।
हार्दिको यदि विश्वासः श्रद्दधातु तदा स्वयम् ॥ ९ ॥

अरिष्वपि यदि प्रीतिः सा प्रीतिः पारमार्थिकी ।
अविश्वास्या अपि प्रीतिमर्हन्ति प्रातिवेशिकाः ॥ १० ॥

पटुभिः कारणैः श्रद्धा न मे ऽ स्त्याङ्ग्लाधिकारिषु ।
तथाप्येतेषु मे प्रीतिरस्त्येवाऽऽर्जवशालिनः ॥ ११ ॥

---

* १९४६ खिस्ताब्दे

यावज्जनेषु विश्वासः स्नेहस्तावदमीषु चेत् ।
किमीदृङ्नश्वरप्रेम्णा व्याजमात्रावलम्बिना ॥ १२ ॥

तस्करा अपि विस्रम्भान्मिथः स्निह्यन्ति कारणात् ।
लुप्तविश्वासमात्रास्तु विद्विषन्ति परस्परम् ॥ १३ ॥

चिन्त्यतां मोहमय्यां यद्वृत्तेदानीं प्रवर्तते ।
लुण्ठनं गृहदाहश्च स्वैरमांग्लविनिन्दनम् ॥ १४ ॥

मृतायाः किमहिंसायाः सा पुरी स्याच्छ्मशानभूः ।
मार्गावस्कन्दिधूर्तानामेतदस्ति विचेष्टितम् ॥ १५ ॥

आंग्लराज्यावसानेऽपि धूर्तास्ते ऽमी यथापुरम् ।
देशेऽस्मिन्नवतिष्ठन्ते तर्जन्तो हि विनिर्बलान् ॥ १६ ॥

न ते ऽस्माभिस्तु निन्द्याः स्युस्त्यक्तव्या रूढिरीदृशी ।
अस्माभिर्ज्वाल्यते ऽङ्गारः स धूर्तैरुपयुज्यते ॥ १७ ॥

कियन्मौर्ख्यमहो तेषां धान्यापणविलुण्ठने ।
उपयोगाय तद्धान्यं क्षुधार्तानां हि रक्षितम् ॥ १८ ॥

वणिग्दुरुपयोगं चेद्धान्यस्य कुरुते तदा ।
न तद्वारयितुं शक्यं लुण्ठनेनापि सर्वथा ॥ १९ ॥

ये जनाः प्रेरयामासुर्धूर्तान्विप्लवकारिणः ।
उदर्कस्तैर्न विज्ञातो धूर्ताश्चक्रुर्यथोदितम् ॥ २० ॥

चौरिचौरापुरे पूर्वं घोरवृत्तोत्तरं मया ।
यदाचरितमासीत्तत्तुल्यं नाचर्यते ऽद्य किम् ॥ २१ ॥

इत्थमाकाङ्क्षिणो ब्रूयामीश्वरप्रेरणा ऽस्ति चेत् ।
करिष्ये ऽवश्यमेवाहं तत्र को मां निवारयेत् ॥ २२ ॥

भूयोऽपि प्रतिजानेऽहं देशजेऽस्ति यथा जने ।
तथैवाङ्ग्लेऽपि मे स्नेहो मानुष्यं हि द्वयोः समम् ॥ २३ ॥

तथापि भारतस्याद्य जनतायाः सुखाप्तये ।
आधिपत्यं स्वदेशीयमतिमात्रं हि कामये ॥ २४ ॥

मोहमय्यां च कल्कत्ताकराचीपुरयोस्तथा ।
वर्तमानदुराचाराद्दुःसाध्यं तद्विभाति मे ॥ २५ ॥

मोहमय्यां निजोद्योगाद्विरतिर्नाविकैः कृता ।
आङ्ग्लाधिकारिसम्पन्नतिरस्कारादिकारणात् ॥ २६ ॥

प्रान्तेष्वन्येष्वपि क्षोभः समकालमजायत ।
राजकीयार्थसंबन्धं सर्वमेतदसूचयत् ॥ २७ ॥

लोका आढ्याश्च दीनाश्च भारतीयाश्च सैनिकाः ।
देशस्वातन्त्र्यमिच्छन्तीत्यासीद्व्यक्तमिदं ततः ॥ २८ ॥

निर्मिता लोहभित्तिः प्रागन्तरा जनसैन्ययोः ।
निपत्य शकलीभूता साम्प्रतं सेत्यभूत्स्फुटम् ॥ २९ ॥

सैनिकेषु हि भूयिष्ठा आसन् कर्षकसंभवाः ।
विविदुस्ते किलांग्लानां नैतिकार्थिकसम्पदः ॥ ३० ॥

यत्सार्धंकशतेनाब्दैश्चलति स्माङ्ग्लशासनम् ।
तदद्यावसितप्रायं भूतपूर्वमिव स्थितम् ॥ ३१ ॥

अतो वाणिज्यसौकर्यं स्वतन्त्रीभूतभारतात् ।
लभ्येत कियदस्माभिरित्यांग्लाश्चिन्तनं व्यधुः ॥ ३२ ॥

पारुष्यलेशमप्येते कृत्वा मनसि भारतात् ।
गच्छेयुर्यदि तत्संगं त्यजेयुर्देशजास्तदा ॥ ३३ ॥

अथाऽमेरिकलोकेषु काचिन्नीतिज्ञमण्डली ।
श्रेयः कामयमानाऽऽसीद्भारतस्य सदाऽऽदरात् ॥ ३४ ॥

आंग्लभूमेरमात्याय नाम्नाऽट्लीति श्रुताय सा ।
तन्त्रीद्वारेण संदेशं प्रेषयामास तद्यथा ॥ ३५ ॥

निरोधप्रतिरोधाभ्यामुद्विग्ना भारतावनिः ।
मन्त्रिभिः क्रियतां दृष्टा स्वातन्त्र्यप्रतिपादनात् ॥ ३६ ॥

विलम्बो न हि कार्योऽत्र कालः शीघ्रं प्रधावति ।
स्फुलिंगः सहसा कोऽपि भारते चेत्समुद्भवेत् ॥ ३७ ॥

उत्पाद्य स महादाहं सर्वानप्युपतापयेत् ।
नैतिकव्यवहाराय क्षणोऽयं परमोत्तमः ॥ ३८ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये नाविक–
कार्यनिग्रहो नाम पञ्चदशोऽध्यायः ।



# षोडशोऽध्यायः

## मद्रुरायात्रा ।

नियन्त्रिता पुराऽऽसीद्या पत्रिकाऽब्दचतुष्टयात् ।
नाम्ना हरिजनाख्या सा पुनरुद्बोविताऽभवत् ॥ १ ॥

पाठकैर्मृग्यते स्मेयं भारतीयैर्न केवलम् ।
आंग्लाऽमेरिकलोकैश्च पुनस्तां द्रष्टुमिच्छुभिः ॥ २ ॥

हिट्लरादिप्रवीराणां महायुधि पराभवे ।
अहिंसासत्यभाजं श्रीगान्धिं पप्रच्छ कश्चन ॥ ३ ॥

'कृत्स्ना विकृतिमापन्ना रणोत्पातोद्भवान्मही ।
अप्यद्यापि स्थितोऽसि त्वं सत्याहिंसे समाश्रितः ॥ ४ ॥

अपि घोराणवास्त्रेण श्रद्धा ते न निराकृता ।
इत्येतद् ज्ञातुकामं मां ब्रूहि सर्वं जगद्गुरो' ॥ ५ ॥

अतो हरिजनस्याङ्के व्यलिखन्मुनिरग्रिमे ।
श्रद्धा मे द्विगुणीभूता सत्याहिंसनयोरिति ॥ ६ ॥

श्रीमान्मद्रपुराद्गान्धिर्गमिष्यन् वरधापुरम् ।
अपश्यज्जनसन्दोहं मद्रुरानगरे पथि ॥ ७ ॥

पत्रे हरिजने स्वक्तलोहमार्गनिवेशनः ।
निजानुभवमुद्दिश्य धूमयानेऽलिखन्मुनिः ॥ ८ ॥

प्रायः संख्या जनस्यासीदन्यूना लक्षपञ्चकात् ।
आ दिगन्तं मनुष्याणामाकृतिर्दृक्पथे स्थिता ॥ ९ ॥

अगम्यः सर्वमार्गोऽभूत्सङ्कुलः स्त्रीपुमर्भकैः ।
जनानां वद्वृधे संख्या पुनश्च प्रार्थनाङ्गणे ॥ १० ॥

नाद्यर्धैकयन्त्रेषु स्थितेष्वपि वचो मम ।
शङ्के पर्यन्तलोकानां नाभवच्छ्रुतिगोचरम् ॥ ११ ॥

स्वयंसेवकवृन्दं च जनसंघातमीदृशम् ।
नियन्तुं न कृताभ्यासमासीदित्यभवत्स्फुटम् ॥ १२ ॥

दूरग्रामपुरीलोकैः सम्पतद्भिर्जनाम्बुधौ ।
जनिता ध्वनिकल्लोलाश्चण्डसंघट्टनं व्यधुः ॥ १३ ॥

तत्पूर्वमभवद्व्यर्थं मम सत्याग्रहव्रतम् ।
जनस्य किमिवाश्चर्यं यदि सत्याग्रहो वृथा ॥ १४ ॥

भृशं संमर्द्यमानोऽपि पृष्ठभागस्थितैर्जनैः ।
मदग्रतो जनस्तोमः स्थितो निःशब्दनिश्चलः ॥ १५ ॥

कोलाहलः ससंमर्दः पृष्ठतो मेऽभ्यवर्धत ।
ततोऽहं वेदिकापीठादवतीर्य विनिर्गतः ॥ १६ ॥

अथाहं साञ्जलिर्भूत्वा लोकान्प्रार्थितवानिदम् ।
गम्यतां भो गृहान् सौम्या नोत्सहे वक्तुमद्य वः ॥ १७ ॥

इत्येवमुक्तमात्रोऽसौ जोषमास्त क्षणाज्जनः ।
सर्वस्यापगमं यावत्तत्र स्थातुमचिन्तयम् ॥ १८ ॥

तावन्मामब्रवीत्कान्तुस्तात निर्गम्यतामितः ।
नातिदूरमितस्त्वां हि यन्त्रयानं प्रतीक्षते ॥ १९ ॥

न रोत्स्यन्ति जना मार्गमिति श्रुत्वा तथेत्यहम् ।
पीठादवातरं यावत्तावदेव पुनर्जनः ॥ २० ॥

अभिधावन्निनादेन रोदसी समपूरयत् ।
बहुधा दर्शितस्नेहो मयि स्वस्वविचेष्टितैः ॥ २१ ॥

सोऽहं मूर्तिरिव प्रेम्णस्तैः सर्वैर्भावितोऽपि सन् ।
प्रेमाविष्कारचेष्टास्तास्तदीया नाभ्यरोचे नु ॥ २२ ॥

तत्र चेत्किञ्चिदस्थास्यं तदाऽवेत्स्यन्नमी जनाः ।
सारं निर्वचनप्रेम्णः संयमस्यापि चात्मनः ॥ २३ ॥

पल्लीपुरे जनव्यूहो महान् सुचरितोऽभवत् ।
तर्कये तत्सुचारित्रं मदुरावृत्तशिक्षितम् ॥ २४ ॥

मदुरायां तथाप्यत्र निन्दार्होऽभून्न कश्चन ।
न च तत्र किमप्यासीद्रात्रिवृत्ते अपास्पदम् ॥ २५ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य-विजये मदुरायात्रा नाम षोडषोऽध्यायः ।



# सप्तदशोऽध्यायः

## पल्लीग्रामसम्मेलनम् ।

एकोनविंशशतके पञ्चचत्वारिंशदुत्तरे ।
अब्दे तृतीयमासस्य प्राप्ते सप्तमवासरे ॥ १ ॥

विश्वयुद्धजयस्यासीदुत्सवो हस्तिनापुरे ।
महाविजृम्भणेनाऽऽङ्ग्लसम्राड्दर्पानुरोधतः ॥ २ ॥

आसन् जयोत्सवस्यास्य बहवः परिपन्थिनः ।
नगराभ्यन्तरे तैश्च कृतोऽभूद् घोरविप्लवः ॥ ३ ॥

जनता पीडिता यस्मिन् प्रागितोऽब्दचतुष्टयात् ।
श्मशानमिव तज्जातं चांदिचौकचतुष्पथम् ॥ ४ ॥

विप्लवे क्रियमाणे च हिंसादहनलुण्ठनैः ।
पातिता गुलिकावृष्टिर्जनौघे पुररक्षकैः ॥ ५ ॥

अनेनाभ्यधिकं क्रुद्धाः प्रतीकारं चिकीर्षवः ।
दुर्गे सांग्रामिकं यानं शिलाभिः प्राहरञ्जनाः ॥ ६ ॥

द्वौ हतौ गुलिकास्त्रेण भारतीयकुमारकौ ।
शवयुग्मं तयोर्निन्ये श्मशानं जनयात्रया ॥ ७ ॥

जनैर्वैद्युतसंयोगाश्छिन्ना दीपाश्च नाशिताः ।
भूयिष्ठा नगरी रात्रौ तमसाऽत्यन्तमावृता ॥ ८ ॥

परेद्युरापणाः पाठशालाश्चित्रालयास्तथा ।
पूर्णविश्रान्तिमासाद्य पिहिता अवतस्थिरे ॥ ९ ॥

जनताया मनोवृत्तिराङ्ग्लेषु परुषा स्थिता ।
तज्जयात्र जना हृष्टाः परं सर्वे पराङ्मुखाः ॥ १० ॥

अथ मद्रपुराद् यास्यन् मार्गे पल्लिपुरे यतिः ।
प्रशान्तां जनतां दृष्ट्वा तोषितस्तामुपादिशत् ॥ ११ ॥

( महात्मोवाच । )

' अस्पृश्यतानिवृत्तिश्चेत्स्पर्शमात्रनिबन्धना ।
तदा सा काष्ठतुल्या स्यात् स्पृश्यतायां गुणैर्विना ॥ १२ ॥

विद्वानपि दुराचारो यदि स्याद्ब्राह्मणस्तदा ।
ब्राह्मणाख्यापि तस्यैषा सर्वथा नोपपद्यते ॥ १३ ॥

यः खलु ब्रह्म जानाति स एव ब्राह्मणः मतः ।
शीलेन न पुनर्वृत्त्या स्वरूपमवधार्यते ॥ १४ ॥

समाजे हि समानः स्याद् द्विजेन मलशोधकः ।
पदमर्हेत्स मौलानाऽऽजादस्यापि यशस्विनः ॥ १५ ॥

स्ववृत्तिमाचरन्नेष यदि राष्ट्रपतिर्भवेत् ।
तद्दिनं हन्त मे भूयात्परमानन्ददायकम् ॥ १६ ॥

अस्मदन्तस्तथा रूढो गाढमस्पृश्यताव्रणः ।
यथाऽस्मज्जीवितं व्याप्य नाना भेदमजीजनत् ॥ १७ ॥

अयं हि ब्राह्मणः सोऽन्यो भवति ब्राह्मणेतरः ।
अयं मे धर्म इत्यन्यस्तवेति च कृता भिदा ॥ १८ ॥

कुतो वा दूषयेदस्मानिदमस्पृश्यताविषम् ।
एकस्यैव कुटुम्बस्य न वयं किमु जातकाः ॥ १९ ॥

मनुष्यकुलसंभूता वयं सर्वे सहोदराः ।
एकस्यैव विशालद्रोर्न किं शाखा इव स्थिताः ॥ २० ॥

अस्मिन्नस्पृश्यताव्याधौ सर्वथोन्मूलिते सति ।
विनश्यन्ति पुराभेदाः स्थाप्यते च समानता ॥ २१ ॥

परोपसुक्तिः स्वार्थाय क्रियते न ततः परम् ।
सद्दकारस्तु सर्वत्र भविष्यति जनप्रियः ॥ २२ ॥

अलमस्पृश्यताऽऽलापैर्वक्ष्यामि प्रस्तुतं परम् ।
तथा हि मां जनः शैले देवस्थानं निनीषति ॥ २३ ॥

मया सह प्रतिष्ठासुर्यदि लोको भवेत्तदा ।
गिरिं षट्शतसोपानमारोढुं न क्षमोऽस्म्यहम् ॥ २४ ॥

न च साऽधित्यका वोढुं पर्याप्ता तावतो जनान् ।
न मे सिध्येच यात्रेति शङ्का मय्युदभूदद्भुतम् ॥ २५ ॥

विचिन्तन् प्रभावेऽहं मूर्तीनां श्रद्धयान्वितः ।
प्रेरितोऽस्मि स्वयं तासां दर्शनायेति सर्वथा ॥ २६ ॥

यद्यदारोप्यते भक्तैर्मूर्तौ संभाव्यते च यत् ।
तत्तदेव भवत्येषा शक्तिहीना स्वरूपतः ॥ २७ ॥

यदा हरिजना देवमन्दिरेभ्यो बहिष्कृताः ।
तदैव मे स्वतःसिद्धा प्रतिमानामशक्तता ॥ २८ ॥

मीनाक्षीमन्दिरं पूर्वं समुपेत्यापि नाविशम् ।
यावद्धरिजनस्तत्र निषिद्धोऽभूत्प्रवेशतः ॥ २९ ॥

प्रविशेयं कथं देवसदनं तत्सुविश्रुतम् ।
मलशोधकमात्मानं स्वयमाख्यापयंश्चिरात् ॥ ३० ॥

समक्षेत्रेषु विश्वात्मा यः समं जीवकोटिभिः ।
वर्तते स हि देवः स्याद्भारतस्येति मे मतिः ॥ ३१ ॥

कतिभिर्भारते लोकैरासाद्येत हिमाचलः ।
परं तु कोट्यो यान्ति लीलया पल्लिपत्तनम् ॥ ३२ ॥

प्रार्थना मेऽद्रिमूलेऽपि देवेन श्रूयतेतराम् ।
न तथा किल भक्तानां शैलाग्रसुरमन्दिरे ॥ ३३ ॥

जानाति हृदयं नृणामीश्वरस्तस्य लक्षकः ।
बहिः प्रदर्शनं व्यर्थं कार्यं चेन्नान्तरात्मनः ॥ ३४ ॥

पर्याप्तं हि ममासीयत् प्रवेष्टुमनुमोदिताः ।
पूजार्थं देवगेहेऽस्मिन् दिष्ट्या हरिजना इति ॥ ३५ ॥

भाषमाणे मयि स्थेयान् जोषमासीज्जनार्णवः ।
अनायिषि गिरेः शृङ्गमासन्यामासितस्ततः ॥ ३६ ॥

जनौघो मम पन्थानं न किञ्चिदुपरुद्धवान् ।
पल्लीसुरालयं यावद्यात्राऽऽसीद्विघ्नवर्जिता ॥ ३७ ॥

एकेन कलविंकेन ग्रीष्मकालो न गम्यते ।
उक्तप्रसंगमात्रेण तस्माद्बहु न तर्कयेत् ॥ ३८ ॥

मुख्यामात्यस्तदा श्रीमानुदघोषयदाटलिः
मन्त्रिवृन्दं ममाऽऽदेशाद्भारतं प्रति यास्यति ॥ ३९ ॥

यादृशो राज्यभारोऽद्य भारतीयैरपेक्ष्यते ।
नेतृभिस्तद्विनिर्णेयं तत्र साह्यकृतो वयम् ॥ ४०

मृगये सहकारित्वं पक्षयोर्विषमे क्षणे ।
जातिधर्ममतेष्वेषां विवादा जटिलाः स्थिताः ॥ ४१ ॥

भारतं यदि सम्पूर्णामस्मदिच्छेत् स्वतन्त्रताम् ।
तदा निष्पाद्यतेऽस्माभिः श्लक्ष्णमार्गेण तत्क्रमः ॥ ४२ ॥

सर्वथा नांग्ललामाय विलम्बोऽत्र करिष्यते ।
यदि तादृग्विलम्बेन हानिः स्याद्भारतावनेः ॥ ४३

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये पल्लीग्रामसम्मेलनं नाम सप्तदशोऽध्यायः ।



## अष्टादशोऽध्यायः

## रामनाममहिमावर्णनम् ।

अथ वैद्यवरः कश्चिन्महात्मानं व्यजिज्ञपत् ।
यदायुर्वेदशास्त्रेषु बहुत्राप्युपलभ्यते ॥ १ ॥

आमयोपशमे रामनामैकान्तिकसाधनम् ।
वैशिष्ट्यं चापि विश्रान्तिचिकित्साया निरूप्यते ॥ २ ॥

तन्निवेदनमुद्दिश्य वैद्यस्यास्य विपश्चितः ।
पत्रे हरिजनेऽलेखीन्महात्मा स्वमतं यथा ॥ ३ ॥

प्रणिन्युर्वैद्यकग्रन्थान् यदा प्राग्वाग्भटादयः ।
तदा विष्णोर्न रामस्य नाम ह्यासीज्जनप्रियम् ॥ ४ ॥

अहं श्रीतुलसीदासे भक्तिमान् शैशवादपि ।
सर्वदा रामनाम्नैव परमात्मानमार्चयम् ॥ ५ ॥

प्रभोरोङ्कारमारभ्य यदि नामावलिः श्रुता ।
तदा नामभिदा स्पष्टा प्रवृत्तिस्तु जने समा ॥ ६ ॥

जगदीशस्तदाज्ञा च द्वयोर्नास्ति भिदाऽनयोः ।
उत्तमोपासना तस्मात्तदीयाज्ञानुवर्तनम् ॥ ७ ॥

तदाज्ञाबद्धभावस्य भक्तस्य परमात्मनः ।
रामनामोच्चपठनं न कदाचिदपेक्ष्यते ॥ ८ ॥

स्वभावाद्वेत्ति स ध्यायन्नाज्ञां श्वासगतिं यथा ।
चिकित्सा तस्य नास्त्यन्या रामनामप्रकीर्तनात् ॥९ ॥

शुकवत्पठनं रामनाम्नः स्पष्टं व्यनक्ति यत् ।
न वेत्ति पठिता देवं सर्वानिष्टनिवारकम् ॥ १० ॥

अयं परमजीवातुर्भिषग्भिर्विविधैरपि ।
स्वयमश्रद्धयोपेतैरातुरेभ्यो न दीयते ॥ ११ ॥

लभ्यं भागीरथीमूलं प्रतिगेहमिति कश्चित् ।
यदि स्वीकुर्वते वैद्यास्तदा स्युर्नष्टजीविकाः ॥ १२ ॥

अतो गत्यन्तराभावाच्चूर्णपेयादिकं हिते ।
परमौषधमित्याहू रोगिणामुपशान्तये ॥ १३ ॥

नाम्नोऽद्भुतप्रभावे चेत्स्वयं वैद्यो न विश्वसेत् ।
वृथैव स्यात्तदादिष्टं रोगिणे नामकीर्तनम् ॥ १४ ॥

न्यायानां पाठनं शक्यं न्यायलेखनपुस्तकैः ।
नानुभूतेर्विना शक्यं रामनाम्ना चिकित्सनम् ॥ १५ ॥

विष्णोर्हि नामसाहस्रादेकस्यापि जयी नरः ।
सर्वरोगविमुक्तः स्यादितीड्या चरकस्य वाक् ॥ १६ ॥

कालेऽस्मिन्दक्षिणे देशे कश्चिन्निर्माय मन्दिरम् ।
मूर्तिं महात्मनस्तत्र प्रतिष्ठाप्य समार्चयत् ॥ १७ ॥

वृत्तान्तं तमुपश्रुत्य महात्मा विजुगुप्सितः ।
वृत्तपत्रे तमुद्दिश्य बोधनामलिखद्यथा ॥ १८ ॥

कीदृशीयमहो लोके मूर्तिपूजा विलक्षणा ।
कस्मान्मन्दिरनिर्माणे कृतस्तेन वृथा व्ययः ॥ १९ ॥

ग्रामिकाश्चापथं नीता अहं चाप्यपमानितः ।
मद्भक्तः पूजनस्यार्थो विपर्यासमवापितः ॥ २० ॥

उद्योगस्तन्तुचक्रेण तन्तुचक्रस्य पूजनम् ।
तच्च स्वराज्यलाभाय जीविकाप्राप्तयेऽथवा ॥ २१ ॥

गीतोक्तधर्मचर्यैव गीतायाः किल पूजनम् ।
न पुनः शुकवत्पाठः पठितुः कण्ठशोषकः ॥ २२ ॥

अनुवृत्तिर्मनुष्यस्य मनुष्यस्यापि पूजनम् ।
सा च तद्गुणमाहात्म्ये न तु तद्दोपलाघवे ॥ २३ ॥

जीवतः पुरुषस्यास्मिन्पूजया कृतमन्दिरे ।
अपभ्रश्यन्ति सर्वेऽपि हन्त धर्माः सनातनाः ॥ २४ ॥

साधुरित्युच्यते मृत्योः प्रागेव न नरः क्वचित् ।
प्रशस्यते गुणोद्रेकैः पूज्यते मरणोत्तरम् ॥ २५ ॥

जानाति भगवानेव मनुष्यस्य हृदोऽन्तरम् ।
जीवन्तं वा मृतं तस्मान्मनुष्यं न समर्चयेत् ॥ २६ ॥

सर्वदा पूजयेत्पूर्णं सत्यं यदभिधीयते ।
तच्चाहुः पण्डिता नित्यं परमात्मानमाश्रितम् ॥ २७ ॥

अतोऽयं मन्दिरस्वामी प्रतिमामपनीय मे ।
कर्तुमर्हति तद्गेहं केन्द्रं सूत्रविनिर्मितेः ॥ २८ ॥

वेतनप्राप्तये केचित्परे यज्ञमनीषया ।
कुर्वन्तु सूत्रनिर्माणं वसानाः खद्दराम्बरम् ॥ २९ ॥

इत्थं हि कर्मणा गीता भविष्यति निदर्शिता ।
तस्याश्च मम चाप्येतद् वस्तुतः पूजनं भवेत् ॥ ३० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्य विजये रामनाममहिमावर्णनं नाम अष्टादशोऽध्यायः ।



# नवदशोऽध्यायः

## हरिजनसहवासानुमोदनम् ।

अथोर्लिग्राममुत्सृज्य गमिष्यन्हस्तिनापुरम् ।
पत्रे हरिज़नेऽलेखीन्महात्मा स्वमनोगतम् ॥ १ ॥

किमर्थं वस्तुमिच्छामि चाण्डालवसताविति ।
संभ्रान्ताः सुहृदः केचिदन्ये चापि हि विस्मिताः ॥ २ ॥

समजायत काङ्क्षेयं कुतो मम हृदन्तरे ।
इति मां यदि पृच्छेयुस्तानत्र प्रतिवच्म्यहम् ॥ ३ ॥

भाव्यमस्माभिरस्पृश्यैरथवा मलशोधकैः ।
इत्युक्तं यन्मयाद्यापि कर्मणा न निदर्शितम् ॥ ४ ॥

तदेतद् ध्यायतः पार्थ भूयश्चिन्ताकुलस्य मे ।
गुर्जरेभ्यः समानीता कैश्चिद्वार्ता हि सा यथा ॥ ५ ॥

एकैव तत्र वाप्यासीदेक एव सुरालयः ।
ययोर्नागरिकैरासन्नस्पृश्याः सहभागिनः ॥ ६ ॥

अस्पृश्यैस्सहवासेच्छां तद्वृत्तमुददीपयत् ।
अचिरात्सफलीकर्तुमेतां च समभून्मतिः ॥ ७ ॥

दूरे हरिजनेभ्यश्चेन्निवसेयं स्वयं तदा ।
विनिन्द्याः स्युः कथं लोका अस्पृश्यत्वं समाश्रिताः ॥ ८ ॥

इति भावनयाऽऽक्रम्य कर्म कर्तुं प्रणोदितः ।
वस्तुं हरिजनावासे निश्चयं कृतवानहम् ॥ ९ ॥

श्रीमान् बिर्ला दीयेच्छां ततो विज्ञापितो मया ।
मोहमय्यां च दिल्ल्यां च निवासं पर्यकल्पयत् ॥ १० ॥

नाहं हरिजनान् स्वैरमुपरोद्धुं समुत्सहे ।
स्वमध्यवर्तिनं नो चेन्मर्पयेयुरिमं जनम् ॥ ११ ॥

नानादेशप्रदेशेषु महात्मा भारतावनेः ।
श्रुतविप्लववृत्तान्तो व्यथितात्माऽलिखद्यथा ॥ १२ ॥

" अहो वायुरिव व्यापी द्वेषः सार्वत्रिकोऽजनि ।
अत्यधर्म्या हि हिंसेयं भारतस्य न युज्यते ॥ १३ ॥

न द्वेषः प्रेमरूपेण पर्यवस्यति कर्हिचित् ।
इति हिंसाद्दता लोका विवदन्ते दुराग्रहात् ॥ १४ ॥

सत्याहिंसात्मकं युद्धं वयं स्वातन्त्र्यलब्धये ।
विधास्याम इति प्रोच्चैः कृताऽस्माभिर्हि घोषणा ॥ १५ ॥

महायुद्धानलाङ्गारो योऽद्य निर्वापितः स्थितः ।
द्वेषविद्रोहनैष्फल्यं जगते घोषयत्यसौ ॥ १६ ॥

विद्वेष्टा न हि विद्वेष्टि विद्वेषस्यैव कारणात् ।
स्वदेशात्किन्तु विद्विष्टान्निष्कासयितुमिच्छति ॥ १७ ॥

अतो हिंसात्मकं युद्धं दूरीकृत्य जनोऽधुना ।
अहिंसासाधनेनैव स्वाभीष्टं खलु साधयेत् ॥ १८ ॥

वर्षाणां पञ्चविंशत्या स्वेच्छयाऽनिच्छयाऽथवा ।
जनतां समुपादिक्षद्राष्ट्रसंघः पुनः पुनः ॥ १९ ॥

आसेतोरातुषाराद्रि ग्रामे ग्रामे पुरे पुरे ।
अहिंसासाधनेनैव स्वातन्त्र्यं प्राप्नुयादिति ॥ २० ॥

इदमाशुतरं पूर्वापेक्षयाऽन्तःस्थलेष्वपि ।
चेतांसि मूककोटीनां दिष्ट्या स्प्रष्टुमपारयत् ॥ २१ ॥

बहवस्तु निगूह्यान्तर्हिंसां हन्त स्वचेतसि ।
अहिंसां मुखमात्रेणोद्घोषयन्त उपादिशन् ॥ २२ ॥

तथापि मुग्धचेतोभिर्जनैरार्जवशालिभिः ।
वक्तॄणामाशयो गूढः सुतर्कैरुपलक्षितः ॥ २३ ॥

अहिंसाधनसम्पत्तिः प्रयत्नेन महीयसा ।
रक्ष्यतां बान्धवास्तस्मादिति भूयोऽनुशास्म्यहम् ॥ २४ ॥

विषयं स्वयमज्ञात्वा न हि स्वैरं ब्रवीमि वः ।
परं स्वानुभवाद्बच्मि वर्षषष्टिमितादहम् ॥ २५ ॥

अत्यन्तविषमः कालो भारतेऽद्य हि वर्तते ।
दीनानां मूककोटीनां मुमूर्षूणां बुभुक्षया ॥ २६ ॥ ”

पत्रे हरिजने श्रीमानलिखद्गान्धिरेकदा ।
पुरुषायुषमुद्दिश्य व्यञ्जयन् स्वमतं तथा ॥ २७ ॥

शताब्दान् पंचविंशत्याऽधिकान् या मे जिजीविषा ।
प्रस्तुता हि मया पूर्वं सा प्रगल्भार्थगर्भिता ॥ २८ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
इतीशावास्यमन्त्रेण कामना मे प्रमाण्यते ॥ २९ ॥

शतस्य पञ्चविंशस्य शतमस्त्युपलक्षणम् ।
इति व्याख्यातमस्ति प्राग्भाष्यकारेण केनचित् ॥ ३० ॥

षोडशोर्ध्वशतेनैव शतसंख्योपलक्ष्यते ।
इति मद्रप्रदेशेषु चिराय श्रूयतेतराम् ॥ ३१ ॥

सङ्गवर्जितसेवा हि न कर्मफलमीक्षते ।
तादृक्सेवामकुर्वन्न कामयेत शतं समाः ॥ ३२ ॥

दीर्घायुष्यमिदं त्यागाद्विना नैवोपलभ्यते ।
तेन त्यक्तेन भुञ्जीथा इतीशावास्यडिण्डिमः ॥ ३३ ॥

यदि जातु फलासक्तो नरो जीवेदियच्चिरम् ।
उज्जीवितशवप्रख्यः सर्वेषां भार एव सः ॥ ३४ ॥

वरं स प्रार्थयेतेशं शीघ्रं देहविमुक्तये ।
स एवास्य परो धर्मो न दीर्घायुष्यकामना ॥ ३५ ॥

देहः परोपकाराय न पुनर्भोगभुक्तये ।
सुखं संजायते त्यागात् त्याग एव हि जीवितम् ॥ ३६ ॥

अकाङ्क्षितफलस्तस्मात्परसेवनतत्परः ।
सपादैकशतं मर्त्यः समीहेत समाः सदा ॥ ३७ ॥

फलमेकान्ततस्त्यक्त्वा सेवां सर्वात्मना चरन् ।
सुखमन्यादृशं विन्देत्को ऽपि हर्तुं न तत्क्षमः ॥ ३८ ॥

हृदयस्य वहत्यन्तस्तत्सुखामृतनिर्झरः ।
अन्तरा तादृशाह्लादं दीर्घायुः स्यान्निरर्थकम् ॥ ३९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये हरिजनसहवासानुमोदनं नाम नवदशोऽध्यायः ।



# विंशोऽध्यायः

## गान्धिनिमन्त्रणम् ।

अथ कश्चिन्महात्मानं पत्रसम्पादकोऽलिखत् ।
पठितस्ते मया ग्रन्थस्तात गीतार्थबोधकः ॥ १ ॥

यतं छलयतामस्मि मद्विना न शुभाशुभम् ।
इत्यादिकं विभोर्वाक्यं विचिकित्सां व्यधान्मम ॥ २

किमिति प्रतिबध्नाति दुष्कर्माचरणं विभुः ।
कथं च पापकर्माणं दण्डयेत्करुणार्णवः ॥ ३ ॥

अप्येतदर्थमेवासीद्विधात्रा निर्मितं जगत् ।
अप्यशक्यं मनुष्याणां प्रशान्त्या जीवितुं भुवि ॥ ४ ॥

( महात्मा प्रत्युवाच । )

अनिष्टसंभवं लोके भगवाननुमन्यते ।
इति श्रोत्रप्रियं न स्याद्वचनं हि शरीरिणाम् ॥ ५ ॥

तथापि परमात्मैव यदि सर्वेष्टदायकः ।
तदा स्वयमनिष्टानामपि स्यात्खलु वारकः ॥ ६ ॥

अद्वितीयबलं दत्त्वा रावणाय स्वयं विभुः ।
न किं तं वधदण्डेनायोजयत्पापकारिणम् ॥ ७ ॥

प्रायोऽत्र बुद्धिमोहस्य निदानं स्यादविज्ञता ।
अप्रमेयस्वरूपस्य तत्त्वतः परमात्मनः ॥ ८ ॥

स एव न्यायनिर्माता न्यायश्च न्यायसाधकः ।
न कोऽप्येतादृशीं शक्तिमात्मीयां कर्तुमीश्वरः ॥ ९ ॥

आत्मीयत्वे भवेन्निन्द्यो निरङ्कुश इव प्रभुः ।
जगदीश्वरनिष्ठैव पूज्यते शक्तिरीदृशी ॥ १० ॥

यदा जगति वास्तव्यं कुरुते निखिलो जनः ।
निश्चयं जीवितुं शान्त्या तदा शान्तिः स्थिरा भवेत् ॥ ११ ॥

साधोर्हि निखिलो लोकः साधुरेव भविष्यति ।
चिन्तयेद् विपरीतं यः स वृथा दर्पदूषितः ॥ १२ ॥

* रसाब्धिग्रहचन्द्राब्दे नृपतेर्मन्त्रिणस्त्रयः ।
वसन्तसमये रम्ये पिकगीतमनोहरे ॥ १३ ॥

प्रफुल्लकुसुमामोदमाजग्मुर्हस्तिनापुरम् ।
राष्ट्रियं जटिलग्रन्थिं विमोचयितुमिच्छवः ॥ १४ ॥

अध्यक्षो मण्डलस्यासीद्राजनीतिविचक्षणः ।
पेथिकलोरेन्सिति ख्यातो ज्येष्ठो बुद्धिमतां वरः ॥ १५ ॥

सोऽयं भारतवर्षस्य प्रजाः सर्वा नभोगिरा ।
निजागमसमुद्देशं बोधयामास तद्यथा ॥ १६ ॥

'राज्यभारं हि निर्वोढुमादौ कार्यः सुसंविधिः ।
अचिराद्भारतं येन पूर्णस्वातन्त्र्यमाप्नुयात् ॥ १७ ॥

यत्कार्यं भारतीयानामात्मस्वातन्त्र्यसिद्धये ।
तत्र साहाय्यकर्तारः सन्निकृष्टा वयं स्थिताः ॥ १८ ॥

अस्माकं नान्यदेतस्मात्कार्यमत्र हि विद्यते ।
हन्ताऽऽप्नोतु निजस्थानं जगद्राष्ट्रेषु भारतम् ॥ १९ ॥

महद्भिर्जगतो राज्यैर्व्यवहारान्वितान्वती ।
लप्स्यतेऽभ्युदयं शीघ्रं स्वतन्त्रा भारतावनिः ॥ २० ॥

न किञ्चिदपि वाञ्छामः साहाय्यस्य कृते वयम् ।
परं सौहार्दमिच्छामः सर्वैर्भारतवासिभिः' ॥ २१ ॥

---

* १९४६ खिस्ताब्दे

प्रान्तराज्यविभागानामधिपैराङ्ग्लमन्त्रिणः ।
पूर्वं मिथः समालोच्य निश्चिक्युर्गान्धिमीक्षितुम् ॥ २२ ॥

मन्त्रिणामग्रणीस्तस्मात्प्रेषयामास गान्धये ।
आदरेण समाह्वानं दिल्लीमागम्यतामिति ॥ २३ ॥

उर्लीग्रामे तदा तिष्ठन्मुनिः पुण्यपुरान्तिके ।
तत्पार्श्वमागमद्दूतः सुधीरो नाम मन्त्रिणाम् ॥ २४ ॥

ऊरीकृत्य तदाह्वानं सद्व्यवस्थासमुत्सुकः ।
महात्मा तत्क्षणादेव प्रतस्थे हस्तिनापुरम् ॥ २५ ॥

मोहमय्यामसौ मार्गे तत्प्रयाणमखण्डयत् ।
कालं हरिजनैः सार्धं कियन्तं नेतुमिच्छया ॥ २६ ॥

मोहमय्या उपान्तस्थे वर्लिनामनि पत्तने ।
महानधिनिवेशोऽभूच्चाण्डालानां चिरादपि ॥ २७ ॥

तेऽमी हरिजनाः ख्याताः केचिदेषां समुद्यताः ।
खलीकर्तुं महात्मानं लोहमार्गस्य संक्रमे ॥ २८ ॥

अनुजग्मुर्महात्मानममी वर्लिपुरावधि ।
तत्कुटीरे शिलावर्षे चासृजन्नीचबुद्धयः ॥ २९ ॥

दग्धुं तस्य कुटीं दुष्टा यावदासन् समुद्यताः
तावन्निवारयामासुः सुधीराः प्रातिवेशिकाः ॥ ३० ॥

कृतघ्नत्वपराकाष्ठामहो धिक् पापशालिनाम् ।
यदमी हन्तुमुद्युक्ताः स्वमित्रमुपकारकम् ॥ ३१ ॥

नैकवर्षाण्यहोरात्रं प्रायस्यद्दीनवत्सलः ।
उद्धर्तुमन्त्यजानेतान्सर्वलोकैस्तृणीकृतान् ॥ ३२ ॥

अस्पृश्यत्वकलङ्कस्य प्रायतिष्ट प्रमार्जने ।
प्रायोपवेशनैर्धीमान् सुनतैश्चाऽऽफलोदयम् ॥ ३३ ॥

अन्त्यजानां परित्राता दीनानां च सुहृन्मणिः ।
कथं नामापमान्येत वचसा कर्मणापि तैः ॥ ३४ ॥

अवादीद्बहुवर्षेभ्यः पूर्वं कश्चित्सुहृन्मुनिम् ।
यदर्थमुपवासादियज्ञा अयि कृतास्त्वया ॥ ३५ ॥

न करिष्यन्ति तेऽनिष्टमित्याशासे भृशं सखे ।
अन्नदातुः करं पूर्वं यथा श्वा दष्टवानिति ॥ ३६ ॥

दिष्ट्या तस्यागमात्पूर्वं तत्सायं वर्लिपत्तने ।
रक्षकैः शमितः क्षोभः शान्तिश्चासीत्प्रतिष्ठिता ॥ ३७ ॥

कुटीरं परितो गान्धेस्तद्रक्षार्थं नियोजिताः ।
तस्थुः पञ्चशतं रात्रौ सशस्त्राः पुररक्षकाः ॥ ३८ ॥

तं रिरक्षिषवः पञ्चविंशतिश्चाधिकारिणः ।
अरुन्धन् यास्यतो लोकान् संमुखीनमहाङ्गणम् ॥ ३९ ॥

धिक्कृतोऽपि महात्माऽसौ प्रकृत्या दीनवत्सलः ।
न विद्रुतो न च क्रुद्धः पापानां दुष्टचेष्टितैः ॥ ४० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये गान्धिनिमन्त्रणं नाम विंशोऽध्यायः ।



# एकविंशोऽध्यायः

## मन्त्रिसंमन्त्रणम् ।

गान्धिर्दिल्लीमथ प्राप्य लोहमार्गनिवेशने ।
ग्रामीणैः कैश्चिदेवासीज्जयघोषेण सत्कृतः ॥ १ ॥

कृष्णाध्वजकराः केचिद्राष्ट्रसङ्घमहात्मनोः ।
निकृष्टिकरवाक्यानि प्रोच्चकैरुद्घोषयन् ॥ २ ॥

चिक्षिपुः प्रस्तरान्याने केचिदन्ये महात्मनः ।
दिष्ट्या निष्कासयामासुस्तान् स्वयंसेवकाः खलान् ॥ ३ ॥

वाल्मीकिमन्दिराख्येऽसौ चाण्डालशिविरे मुनिः ।
कृतावासोऽभयीत्सायं दैनिकप्रार्थनोत्तरम् ॥ ४ ॥

अहो अस्पृश्यता नाम कलङ्कोऽयं महत्तमः ।
हिन्दुधर्मात्प्रमार्ष्टव्यो देशकल्याणमिच्छुभिः ॥ ५ ॥

सार्कं हरिजनैः स्निग्धैर्वसन्नश्नन् स्वपंश्चरन् ।
गृहस्यारोग्यसंरक्षां शिक्षयिष्ये शनैरमून् ॥ ६ ॥

अन्त्यजानामधोगत्यै स्वयं वाच्योऽस्मि यत्ततः ।
किमाश्चर्यं यदि क्रुद्धा मयि स्युः केचिदन्त्यजाः ॥ ७ ॥

अयान्येद्युर्लघुव्याख्यां आकाश्यमनयन्मुनिः ।
मुञ्च भारतमित्युक्तेरर्थसर्वस्वबोधिकाम् ॥ ८ ॥

मुञ्च भारतमित्युक्तं यदहिंसात्मकं वचः ।
अमोघाक्रन्दनिर्घोषः सहजः सोऽन्तरात्मनः ॥ ९ ॥

एतेन परदेश्यानां प्राभवस्य निवर्तनम् ।
सूच्यते न पुनस्तेषामस्माभिरवसादनम् ॥ १० ॥

विदेश्यान्प्रति विद्वेषो नास्त्यस्मिन्संविधानके ।
यथा वयं तथा तेऽपि मनुष्या इति मन्महे ॥ ११ ॥

भयमेव विदेशीयाद्विद्वेषस्य हि कारणम् ।
गते भये न विद्वेषस्यावकाशोऽपि विद्यते ॥ १२ ॥

परिवर्तनतस्तस्य भवेन्नः परिवर्तनम् ।
गते च नोऽपि नीचत्वे गतैव स्यात्तदुन्नता ॥ १३ ॥

तस्य शस्त्रास्त्रसङ्घातो महागारेषु रक्षितः ।
आणवं परमास्त्रं च नास्माकं जनयेद्भयम् ॥ १४ ॥

चिरेणान्योन्यसातङ्काः शासकाश्च प्रजा अपि ।
सुखेनोच्छ्वासनिश्वासावपि प्रायो न कुर्वते ॥ १५ ॥

अतः स्वातन्त्र्यलाभेऽपि सुचिरक्लेशनाज्जनः ।
रुद्धश्वास इव प्रायः प्रारम्भे न सुखायते ॥ १६ ॥

यदि स्वातन्त्र्यमागच्छेद्विना हिंसां तदा हि तत् ।
जगतो निखिलस्यापि भवेन्नूतनशिक्षणम् ॥ १७ ॥

परेद्युः समुपेत्यासौ नृपतेर्मन्त्रिमण्डलम् ।
तेन संमन्त्रयन् सार्धं घटिकाः पञ्च नीतवान् ॥ १८ ॥

अब्रवीत्स च निर्व्याजं प्रदोषप्रार्थनोत्तरम् ।
अश्रद्धा मन्त्रिवृन्देऽस्मिन् परं कापुरुषोचिता ॥ १९ ॥

आंग्लभूमेरमी प्राज्ञाः प्राप्ता निर्व्याजवृत्तयः ।
न जातु भारतीयानां भविष्यन्ति प्रतारकाः ॥ २० ॥

देयाल्महति कार्येऽस्मिन्नात्मनः सुमतिं विभुः ॥
भूयात्सन्निहितश्चापि सर्वदा मार्गदर्शकः ॥ २१ ॥

हिन्दूनां प्रार्थनैषा च मुस्लिमानामथेदृशी ।
इति लोकस्य भेदोक्त्या मम दोदूयते मनः ॥ २२ ॥

अल्ल इत्याख्यया कैश्चिदीश इत्यपरैर्जनैः ।
कृत्स्नस्य जगतः कर्ता भगवान् व्यपदिश्यते ॥ २३ ॥

न भजामः कथावीरं रामं दाशरथिं नरम् ।
परं तदाख्यया देवं विश्वव्यापिनमीमहे ॥ २४ ॥

इत्युक्त्वा स ययौ श्रीमान्द्रष्टुं भूपालमन्त्रिणः ।
प्रत्यगात् परात्रे च पुनर्वाल्मीकिमन्दिरम् ॥ २५ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये मन्त्रिसंमन्त्रणं नाम
एकविंशोऽध्यायः ।

# द्वाविंशोऽध्यायः

## मन्त्रिसन्धानवैकल्यम् ।

राज्यभारं पुनर्वोढुं राष्ट्रसङ्घोऽन्वमन्यत ।
प्रतिराष्ट्रविभागं च नियुक्ता मन्त्रिणस्ततः ॥ १ ॥

प्रान्त्यानामधिपाः सर्वे तदेतदुद्‌घोषयन् ।
राजकीयसमाचारपत्रेषु स्वस्वनामतः ॥ २ ॥

तदात्व एव निमुक्तो बन्धनान्नेहरुरब्रवीत् ।
उद्घोषयन्नुपायातां मण्डलीमांग्लमन्त्रिणाम् ॥ ३ ॥

परस्परानुमत्येन स्वातन्त्र्यं यदि नैष्यति ।
तदा देशे ध्रुवं भावी विक्षोभः परमोत्कटः ॥ ४ ॥

नान्यो हेतुर्हि साम्नोऽस्ति प्रभुत्वपरिवर्तनात् ।
नैवानुमोदते राष्ट्रसंघो देशविभाजनम् ॥ ५ ॥

यद्यपि प्रतिपद्येरन्नेतस्मिन्नांग्लमन्त्रिणः ।
तथापि राष्ट्रसंघस्तत्प्रतिरोत्स्यति सर्वथा ॥ ६ ॥

जिन्नः श्रीमानथोवाच पाकिस्थानेऽनुमोदिते ।
प्रवेष्टुमेष सज्जोऽस्मि राज्यशासकमण्डलीम् ॥ ७ ॥

तर्जयेद्राष्ट्रसंघश्चेद्रक्तपातेन मुस्लिमान् ।
तदा मुस्लिमसंघोऽयं तटस्थो नावतिष्ठते ॥ ८ ॥

नास्मत्संघं विना राज्यभारस्तिष्ठेद्दिनद्वयम् ।
अनिवार्यो हि संधाने पाकिस्थानस्य निर्णयः ॥ ९ ॥

अभवन् राज्यसूत्रस्य ग्रन्थिविश्लेषकर्मणि ।
निष्फला मन्त्रिणां यत्ना जिन्नस्यैव दुराग्रहात् ॥ १० ॥

आंग्लपत्त्रमभारेऽथ निश्चित्ये वेवलः प्रभुः ।
सिमलाद्रौ समाह्वातुमेकं त्रैपक्षिकं सदः ॥ ११ ॥

प्रमुखान् राष्ट्रसंघस्य तथा मुस्लिमसंसदः ।
श्रीगान्धिं च महात्मानं सदस्यान् स न्यमन्त्रयत् ॥ १२ ॥

असकृन्मन्त्रणं चक्रे महात्मा मन्त्रिभिः सह ।
तत्तु सर्वं वृथैवाऽऽसीद्विफला च सभाऽजनि ॥ १३ ॥

उभयोः पक्षयोः संधिं विधातुमभिलाषुकः ।
पङ्क्तिं वाङ्मुखं चक्रे नूतनं सचिवाग्रणीः ॥ १४ ॥

अध्याये तु त्रयोविंशे विस्तरेणोपवर्ण्यते ।
तदेतच्छ्रीमतो गान्धेरुपोद्घातपुरस्सरम् ॥ १५ ॥

श्रीमान् गान्धिरुवाच प्राक् प्रस्थानात्सिमलाचलम् ।
लोकविप्लवमुद्दिश्य दैनिकप्रार्थनोत्तरम् ॥ १६ ॥

सत्यार्थाः परिगण्यन्ते लोकैर्वृत्तान्तपत्रिकाः ।
कुराणभगवद्गीताक्रैस्तवेदोक्तयो यथा ॥ १७ ॥

तत्तद्देशस्य पत्रेषु यद्यद्वृत्तं प्रकाश्यते ।
विश्वसन्ति जनास्तस्मिन् निर्विचारं श्रुतिष्विव ॥ १८ ॥

तथा हि वृत्तपत्रेषु प्रागेवैतत्प्रकाशितम् ।
यद्भविष्यति सर्वत्र न चिराद् घोरविप्लवः ॥ १९

ईदृग्वार्ताभिरास्तेऽद्य संत्रस्ता जनता किल ।
येषां भगवति श्रद्धा तेषां त्रासो न युज्यते ॥ २० ॥

यदि जातु म्रियेरल्पो म्रियेरन् बहवोऽपि वा ।
ततः किमिति भेतव्यं जातस्य मरणं ध्रुवम् ॥ २१ ॥

प्रविश्य निर्भयं लोकैः संमर्दे क्षोभकारिणाम् ।
पापान्निवर्तनीयास्ते समाधानपुरःसरम् ॥ २२ ॥

कश्चिदाह जनाः क्षुब्धैर्हन्यन्ते धार्मैरिति ।
अस्मिन् व्यतिकरे निन्द्याः शिक्षिता न तु पामराः ॥ २३ ॥

सामाजिका हि ते केचित्प्रशस्तपदवीधराः ।
प्रवर्तयन्ति,तानज्ञान्विविक्त घोरकर्मणि ॥ २४ ।

अतो निवारणीयास्ते शिक्षितैः पापकर्मणः ।
निजप्राणव्ययेनापि प्रसगे सति तादृशे ॥ २५ ॥

बालिकाप्युपसर्प्यैतान् निहन्तृन्याचितुं क्षमा ।
कृपया क्षिप्रमेवार्या विरमन्तु वधादिति ॥ २६ ॥

विरमेयुरमी प्रायो हिंसेयुरथवापि ताम् ।
मृता चेदमरी नित्यस्मरणीया च सा भवेत् ॥ २७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये मन्त्रिसन्धानवैकल्य
नाम द्वाविंशोऽध्यायः ।

# त्रयोविंशोऽध्यायः

## रामराज्यवर्णनम् ।

रामराज्यमिति ख्यात स्वाराज्यं यद्भुव गतम् ।
चक्रे हरिजने व्याख्यां महात्मा तस्य तद्यथा ॥ १ ॥

व्याख्यातु बहुभिर्लोकैराहूतोऽस्मि स्वतन्त्रताम् ।
रामराज्यदशा सेति व्याचक्षेऽद्य समासतः ॥ २ ॥

रामराज्य न हि स्वर्गतुल्यमस्तीति मे मतिः ।
स्वर्गो हि दूरतः स्थायी तद्वृत्तालोचनेन किम् ॥ ३ ॥

भविष्यद् दूरदृश्यं हि नाभिलष्यामि वेदितुम् ।
यदि स्याद्रम्यताद्यस्वे भवेद्रम्यैव चायतिः ॥ ४ ॥

तस्मात्स्वातन्त्र्यमेष्टव्यं नैतिकार्थिकधार्मिकम् ।
स्वातन्त्र्य नैतिक सिध्येदांग्लसेनाव्यपोहतः ॥ ५ ॥

कनिष्ठश्रेष्ठयोर्मध्ये तदा हि समता भवेत् ।
स्वातन्त्र्य धार्मिक सिध्येद्रक्षासैन्यविवर्जनात् ॥ ६ ॥

आंग्लसैन्यस्थले राष्ट्रसेना यदि नियुज्यते ।
स्वायत्तो न भवेद्देशः स्वसैन्येनाप्यधिष्ठितः ॥ ७ ॥

स्वसैन्यदमिते राष्ट्रे न शक्तोस्त्यतिदुर्बलः ।
क्रमेणापि समारोढुमाध्यात्मिकसमुन्नतिम् ॥ ८ ॥

यदि मानुष्यक सर्व निवर्तेत जुगुप्सया ।
युद्धस्यात्याहितनातात्तदा हानिर्न विद्यते ॥ ९ ॥

रक्तपातोऽपि न व्यर्थस्तेन चेच्छिक्षितो जन ।
स्वरक्तोत्सर्जन श्रेयः परासृग्यातनादिति ॥ १० ॥

यद्यांग्लमन्त्रिणां कूटः स्वातन्त्र्य प्रतिपादयेत् ।
तदा भारतमप्यिष्ठ स्थापयेत्सैन्यमात्मनः ॥ ११ ॥

इत्थं तद्भुवि राष्ट्राणां पञ्चमं वर्गमाश्रयेत् ।
नेच्छेत्सांग्रामिकख्यातिं मुधा सर्वस्वनाशिनीम् ॥ १२ ॥

अहिंसानीतिमेवाग्रे विदध्याच्छुद्धिमत्तराम् ।
क्रमेण चाग्रिमं राष्ट्रं भूत्वा संमानमाप्नुयात् ॥ १३ ॥

स्वातन्त्र्यं भारतं भूरिश्रमेण समुपार्जितम् ।
जगद्भारं लघूकर्तुं प्रयोजयति सम्भवे ॥ १४ ॥

समाप्तविजयाप्येषा विश्वयुद्धे हि मेदिनी ।
नानाविधेन भारेण क्षुण्णपृष्ठेव वर्तते ॥ १५ ॥

इति सौ. क्षमयाः कृतिषु स्वराज्यविजये रामराज्यवर्णनं नाम त्रयोविंशोऽध्यायः ।

# चतुर्विंशोऽध्यायः

## नवविधानवर्णनम् ।

अथामात्यः प्रजागोष्ठ्यामाटलिः सन्यवेशयत् ।
मुख्यानि षड् विधानानि राज्यभाराय भारते ॥ १ ॥

प्रथमं तावदांग्लेयभारतान्तर्निवेशयेत् ।
निखिलाश्रितसंस्थानसमुदायं यथाक्रमम् ॥ २ ॥

विदेशव्यवहाराणां स्वराष्ट्रत्राणकर्मणाम् ।
यानवार्तादिकार्याणामीष्टे संयुक्तभारतम् ॥ ३ ॥

त्रयाणां च कृते वित्तं यावदावश्यकं भवेत् ।
तावतः संग्रहं कर्तुमधिकारं वहेदपि ॥ ४ ॥

द्वितीयमथ संयुक्तभारतं रचयेद् द्वयम् ।
समितिं कार्यकर्तॄणां सभां च न्यायकारिणीम् ॥ ५ ॥

शेषाः सर्वेऽधिकाराः स्युस्तत्तत्प्रान्त्यप्रयोजिताः ।
इति मुख्यविधानेन तृतीयेन प्रकाशितम् ॥ ६ ॥

चतुर्थं च यथापूर्वमभिरक्षेयुरात्मनः ।
प्रभुत्वाधिकृतीः सर्वाः संस्थानान्यखिलान्यपि ॥ ७ ॥

पञ्चमं च भवेत्प्रान्त्यैः प्रातिनिध्यं सुरक्षितम् ।
सभयोः कार्यकर्तॄणां तथा न्यायविधायिनाम् ॥ ८ ॥

षष्ठं च राज्यभारः स्यात्कल्पितश्चान्तरालिकः ।
प्रत्यन्ददर्शकं चापि कुर्यादेवं ततः परम् ॥ ९ ॥

अथाऽऽकाशगिरा श्रीमान् क्रिप्सः साम्नोदघोषयत् ।
अथ सर्वात्मनाऽऽश्वासे यत्कृत्स्ना भारतप्रजाः ॥ १० ॥

अङ्गीकृत्य विधीनेतान् सद्योयोगचिकीर्षया ।
मासार्धाभ्यन्तरे कुर्युरान्तरालिकशासनम् ॥ ११ ॥

परेद्युरवदद्रान्धिः प्रदोषप्रार्थनोत्तरम् ।
आंग्लामात्यस्य समयान् प्रशंसन् प्रीतमानसः ॥ १२ ॥

कविः कश्चित्पुराऽवादीद्द्वयं हि निवासिनः ।
देशस्य शोकदुःखाभ्यामस्पृष्टा इति तत्त्ववित् ॥ १३ ॥

चिरात्पर्यटताऽप्यस्मिन् सर्वत्र पृथिवीतले ।
न मया लक्षितो देशः शोकदुःखविवर्जितः ॥ १४ ॥

हृदि यस्तत्त्वतः शुद्धः शोकदुःखे न तस्य हि ।
ईदृङ्मनुष्यकोटीनां मनोवृत्तिस्तु दुर्लभा ॥ १५ ॥

तथाऽपि मम कामोऽयं यदेषा भारतावनिः ।
सुखैकभाजनं भूयात् कविना वर्णितं यथा ॥ १६ ॥

गतेऽहनि मया प्रोक्ता यास्त्वमात्येन सूचनाः ।
देशस्य राज्यभारार्थे मन्त्रिद्वारा प्रकाशिताः ॥ १७ ॥

विमृश्यन्तामिमाः सर्वाः सूक्ष्मदृष्टिप्रभावतः ।
श्रेयसेऽखिलराष्ट्रस्य न स्वाकुंचितया दृशा ॥ १८ ॥

स्वाभिप्रायं प्रदास्यामि निशम्य भवतां मतम् ।
प्रस्तुत हि विमर्ष्टव्यं स्वयमेव जनैः पृथक् ॥ १९ ॥

एकीकर्तुमुभौ पक्षौ प्रयत्नः सुमहान् कृतः ।
प्रभुणा वेवलेनात्र मन्त्रिमिश्च वृथा किल ॥ २० ॥

श्रीमताऽऽटलिना तस्माद्विषयः कल्पिता नवाः ।
स्वीकुर्यादिति तानेतान्न्यायतन्त्रकृतां सभा ॥ २१ ॥

परिवर्तयितुं कांश्चिन्निरसकर्तुमुत कांश्चित् ।
संशोधयितुमेषां वा प्रभवेन्मन्त्रिमण्डली ॥ २२ ॥

गृह्णीत वा जहीतेति नामात्यः कुरुते हठम् ।
नान्यथा तन्त्रनिर्माणसभा स्याद्देशमुक्तये ॥ २३ ॥

यतः सा प्रतिबन्धैश्छेदीर्घैर्निगडीकृता ।
स्वतन्त्रराज्यतन्त्राणां निर्माणे प्रभवेत्कथम् ॥ २४ ॥

वैकल्यमन्तरा किञ्चिद् ग्राह्याः षड्विधयो ह्यमी ।
नियुक्तमन्त्रिवृन्दं च समर्हत्यभिनन्दनम् ॥ २५ ॥

केचिदाहुरमी आंग्लाश्चरितुं धर्म्यमक्षमाः ।
नैवं मन्ये यतस्तेऽपि देवभीता यथा वयम् ॥ २६ ॥

स्पष्टं यावदनिर्णीतमसुकोऽसत्यवागिति ।
न तावदभिजातस्य सन्देग्धुमुपपद्यते ॥ २७ ॥

सर्वात्मना बभूवांग्लः श्रीमानान्ध्रुर्महोदयः ।
स हि प्राणाञ्जहौ श्राम्यन् शर्मणे भारतावनेः ॥ २८ ॥

अतिमात्रमधर्म्यं स्याद्यदि संशेमहे वयम् ।
तद्देश्यानां च सर्वेषां चारित्रे सहसाऽधुना ॥ २९ ॥

कामं कृतमनिष्टं नो बहुधाऽप्यांग्लशासकैः ।
स्वातन्त्र्यस्याऽऽगमोऽथापि श्रद्धेयो मन्त्रिवाक्यतः ॥ ३० ॥

अस्ति बीजं तदन्तःस्थं येनेदं शुष्कभारतम् ।
भवेदुज्जीवितं भूयः शोकदुःखाधिवर्जितम् ॥ ३१ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये नवविधानवर्णनं नाम चतुर्विंशोऽध्यायः ।



## पञ्चविंशोऽध्यायः

### मसूरीयात्रावर्णनम् ।

अथ वैशाखमासान्ते ग्रीष्मचण्डोष्मणाऽऽकुलः ।
विश्रान्त्यै सानुगो गान्धिर्मसूरीगिरिमव्रजत् ॥ १ ॥

शीतवातैस्तुषाराद्रैर्मन्दमन्दैः सुगन्धिभिः ।
सेव्यमानोऽनयत्कांश्चित्सुखेन दिवसान्मुनिः ॥ २ ॥

धनाढ्या नैकदेशेभ्यः समेता भोगलोलुपाः ।
तुङ्गसौधान्हिमक्ष्माभृत्यध्यवात्सुः सवैभवम् ॥ ३ ॥

नृत्यमिष्टान्नपेयेषु कुर्वाणास्ते घनव्ययम् ।
पस्पर्धिरे किलाऽन्योन्यं स्वस्वदम्भप्रदर्शने ॥ ४ ॥

अत्र कर्मकरा दीनाः कर्षन्तो यानसञ्चयम् ।
मलीमसकुटीरेषु कृच्छ्रेणासूनधारयन् ॥ ५ ॥

अटतो ह्रस्ववीथीषु पश्यतो निधनालयान् ।
शृण्वतश्च कथां दीनामन्तरात्माऽद्रवन्मुनेः ॥ ६ ॥

धनिकान् सुहृदः कांश्चिन्महात्मा न्यगदद्यथा ।
मसूरीमागतोऽस्म्यत्र स्वयं सामान्यलोकवत् ॥ ७ ॥

मत्सौख्यस्य न युष्माभिश्चिन्ता कार्या मनागपि ।
ईश्वरं हि विना नान्यो रक्षकः पृथिवीतले ॥ ८ ॥

*तदाश्रयोऽस्ति पर्याप्तः स रक्षेद्वा विनाशयेत् ।*
स कश्चिद्रक्षणायैव मन्ये नाशयति क्वचित् ॥ ९ ॥

प्रागेवागमनादत्र कथितोऽस्मि सुहृज्जनैः ।
धनिकानां यथाचारा विलसन्तीह लौकिकाः ॥ १० ॥

अस्त्यसौ पर्वतीयोऽत्र प्रदेशः सिमलादिवत् ।
भोगार्थं धनिनामेव न पुनर्निर्धनोचितः ॥ ११ ॥

सेव्यध्वे पामरैर्यूयं दास्यभावमुपाश्रितः ।
धूर्वहैरिव दोर्भ्यां तैर्यानमाकृष्यते च वः ॥ १२ ॥

अधिष्ठितानि यानानि पुष्टपीवरविग्रहैः ।
कर्षतामार्तनादो मे चेतो विध्यति शूलवत् ॥ १३ ॥

न वच्म्येतदुपालब्धुं परं स्मारयितुं हि वः ।
युष्माभिर्विस्मृतप्रायां दीनानां दुरवस्थितिम् ॥ १४ ॥

नियोजनं वराकाणां पशुवद्भारवाहने ।
भवतामपि चात्मानं दूनयेन्नास्ति संशयः ॥ १५ ॥

विचिन्त्यं शोचनीयं तत्कार्पण्यं सुस्थितैर्जनैः ।
विधेयश्च प्रयत्नोऽपि तज्जीवनपरीक्षणे ॥ १६ ॥

नागतोऽस्मि विहाराय न च शीतानिलेप्सया ।
प्राप्तोऽस्मि भिषगादेशाद्विशेषात्सेवितुं च वः ॥ १७ ॥

न लभ्योऽद्रिविहारोऽयं सामान्यजनकोटिभिः ।
समभूमिस्थले जातैर्यावज्जीवं च निर्धनैः ॥ १८ ॥

अयि भो दीयतामाशीः प्रशान्तो ध्यास्रिये कचित् ।
निजकार्ये निराबाधं ध्यायेयं च जगत्पतिम् ॥ १९ ॥

इत्युक्त्वा न विशश्राम दीनसेवापरो मुनिः ।
परेद्युः स्म पुनः प्राह प्रदोषप्रार्थनोत्तरम् ॥ २० ॥

रमणीयप्रदेशेऽस्मिन्नेकमावश्यकं गृहम् ।
यत्र वायुगुणप्रीता दीनाः स्युः सुखवासिनः ॥ २१ ॥

स्वयमेवात्मसंमत्या जातो हरिजनोऽस्म्यहम् ।
दीना हरिजना यत्र निवस्तुं तत्र कामये ॥ २२ ॥

प्रायो हरिजनो वर्णे प्रत्याख्यायात्स्वजन्मनः ।
न शक्नोमि तु तत्कर्तुं स्वयं हरिजनो भवन् ॥ २३ ॥

यदि हिन्दुमतं रक्ष्यं विनाशात्पृथिवीतले ।
तर्हि जात्यभिमानाख्यव्रणं निर्मूलयेद् द्रुतम् ॥ २४ ॥

निर्भयं सर्वहिन्दुभ्यः पूर्वमित्थमसूचयम् ।
यदवश्यमितो यूयमतिशूद्रा भविष्यथ ॥ २५ ॥

शैले हरिजनावासो भवेदत्रैव चेत्तदा ।
निवसेयमहं तत्र मुदा हरिजनैः सह ॥ २६ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये मसूरीयात्रा-
वर्णनं नाम पंचविंशोऽध्यायः ।



# षड्विंशोऽध्यायः

## मन्त्रिनियोजनम् ।

मसूर्याश्च परावृत्तो दिल्लीमधिवसन्मुनिः ।
जगाद जनसन्दोहं दैनिकप्रार्थनोत्तरम् ॥ १ ॥

क्रैस्तधर्माश्रितस्यापि शासनं परशासितुः ।
यीशुखिस्तगुरोर्वाक्याद् विपरीतं तु विद्यते ॥ २ ॥

नामधेयं प्रजाः सर्वाः स्वीचक्रुजगदीशितुः ।
शासिता तु पिशाचेशं दिव्यसिंहासने व्यधात् ॥ ३ ॥

स्तुवन्ति बहुभिर्गीतैः श्रीखिस्तं प्रार्थनालये ।
तस्य धर्मोपदेशांस्तु शासको नानुवर्तते ॥ ४ ॥

यदीस्लामस्य यीशोर्वा भवेदत्र प्रशासनम् ।
तद्धर्मव्यत्ययाभावादनुवर्तेय तन्मुदा ॥ ५ ॥

श्रीरामस्य च काले तु शशास प्राग् दशाननः ।
इदानीं मानुषस्थाने पिशाचः शास्ति भारतम् ॥ ६ ॥

उत्कोचग्रहणारिष्टं सर्वतो दृश्यतेतराम् ।
क्लिश्यन्ति कोट्यो नृणामन्नवस्त्रविवर्जिताः ॥ ७ ॥

आन्तर्यराज्यभारस्य स्थापनायाऽऽह्वयत्प्रभुः ।
नायकान् केवलः पक्षद्वयस्यापि चतुर्दश ॥ ८ ॥

नेहरू–राजगोपाल–जिन्न–मैताब–नेशराः ।
बलदेव–जगज्जीवन्पटेलप्रमुखा ह्यमी ॥ ९ ॥

मैताबं तु परित्यज्य शरच्चन्द्रं नियोजयेत् ।
इति प्रार्थितवान् सङ्घो राष्ट्रियः शासकाधिपम् ॥ १० ॥

अथ कर्तव्यमुद्दिश्य वैमत्ये समुपस्थिते ।
महात्मा राष्ट्रसङ्घस्य कार्यकर्तॄनवोचत ॥ ११ ॥

तथाहि राष्ट्रसङ्घोऽसौ प्रायस्त्र्यद्धर्विंशतिम् ।
राष्ट्रियत्वसमुत्कर्षं सर्वथा परिरक्षितुम् ॥ १२ ॥

आहृतस्य परित्यागाल्लुप्तवैशिष्ट्यलक्षणः ।
हिन्दुभिः केवलैर्युक्तो राष्ट्रसङ्घो भविष्यति ॥ १३ ॥

अन्तराभवराज्यस्य वरीतुं मन्त्रिणः पृथक् ।
प्रभवेद्राष्ट्रसङ्घोऽयं नवेत्यादौ विनिर्णयेत् ॥ १४ ॥

अधिकारे सति स्वैरं जातिधर्मानपेक्षया ।
नियोज्या राष्ट्रसङ्घेन निर्बाधं निजमन्त्रिणः ॥ १५ ॥

मैताबस्य हि यत्स्थाने शरच्चन्द्रनियोजनम् ।
समतां तत्स्थिरीकुर्याद् हिन्दुमुस्लिमपक्षयोः ॥ १६ ॥

तथा राष्ट्रसभा कुर्यान्मुस्लिमानां गणे यथा ।
राष्ट्रियो मुस्लिमश्चापि प्रातिनिध्याय गण्यते ॥ १७ ॥

राज्यभारविनिर्मूलः प्राक्तने सङ्घनिर्णये ।
अन्तर्भवति वा नेति परीक्ष्य क्रियतां हि तत् ॥ १८ ॥

इत्युक्त राष्ट्रसङ्घस्य केचित्कार्याधिकारिणः ।
प्रस्तुते विषयेऽन्योन्यं तस्थुर्वैमत्यमाश्रिताः ॥ १९ ॥

स्वीकर्तुं तमुपन्यासं केचिदैच्छन्महात्मनः ।
प्रतिकूलमताश्चान्ये सांधिका अवतस्थिरे ॥ २० ॥

अग्रहीष्यद्विधानं चेद् राष्ट्रसंघो यथास्थितम् ।
अहास्यत्संघसंबन्धं महात्मेति न संशयः ॥ २१ ॥

श्रीमानत्रान्तरे जिन्नो ऽकथयद्वेवलं प्रभुम् ।
न कोऽपि मुस्लिमो ग्राह्यो बहिर्मुस्लिमसंघतः ॥ २२ ॥

संघोऽयमविशेषेण मुस्लिमप्रातिनिध्यभाक् ।
भवेत्तुप्ताधिकारोऽसौ राष्ट्रियैरन्यमुस्लिमैः ॥ २३ ॥

राष्ट्रसंघसदस्येषु मुस्लिमश्चेन्नियोज्यते ।
नैव मुस्लिमसंघस्तच्छासनं स्वीकरिष्यति ॥ २४ ॥

क्रिप्साख्यः सचिवो गान्धिं ययाचे सादरं ततः ।
नामावलिर्नियुक्तानां नान्यथा क्रियतामिति ॥ २५ ॥

कारणं चाह यन्नाम्नः परिवृत्त्याभवेद् ध्रुवम् ।
अग्रे मुस्लिमसंघेन व्यवहारोऽतिदुष्करः ॥ २६ ॥

समितिः कार्यकर्तॄणां निश्चित्याथ न्यवेदयत् ।
मन्त्रिणामनुमोदाय त्रिविधं परिवर्तनम् ॥ २७ ॥

तत्रासीत्प्रथमं स्थाने मेताथस्य नियोजयेत् ।
श्रीशरच्चन्द्रबोसाख्यं नूतने मन्त्रिमण्डले ॥ २८ ॥

द्वितीयं च नियुञ्जीत तत्रैकं देशवत्सलम् ।
पारसीकं न साम्राज्ये योऽभवन्नृपकिङ्करः ॥ २९ ॥

तृतीयं चाधिकारोऽस्ति स्वतःसिद्धः स्वसंसदः ।
वरीतुं कञ्चनामीष्टं मन्त्रित्वाय स्वमागतः ॥ ३० ॥

श्रुत्वैताः परिवर्तोक्तीः संतुष्टो मुनिरब्रवीत् ।
दास्यामि पूर्णसाहाय्यं यथांग्लैरनुमोदिताः ॥ ३१ ॥

परिवर्तनमेतत्तु राष्ट्रसंघेन वाञ्छितम् ।
नान्वमोदि परं त्वेभिर्नृपतेर्मन्त्रिभिस्त्रिभिः ॥ ३२ ॥

राष्ट्रसंघो निराचक्रे तैरुपस्थापितं विधिम् ।
राज्यभारक्रमो नूत्नो न चासीत्परिकल्पितः ॥ ३३ ॥

आसाद्यांग्लभुवं भूयः करिष्यामोऽन्ययोजनाम् ।
इत्याश्रुत्य विमानेन डिड्यिरे मन्त्रिणस्त्रयः ॥ ३४ ॥

ततः संस्थापयामास सम्राट्प्रतिनिधिः स्वयम् ।
राज्यभारक्रमं भूयो रक्षार्थं हस्तिनापुरे ॥ ३५ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये मन्त्रिनियोजनं नाम षड्विंशोऽध्यायः ।



# सप्तविंशोऽध्यायः

## आकस्मिकोद्‌घातः ।

पथि पुण्यात्मनः पुण्यपत्तनं व्रजतो मुनेः ।
अभूदाकस्मिकोद्घातो नेरलग्रामसन्निधौ ॥ १ ॥

तथाहि निहिता धूर्तैर्लोहमार्गे महाशिलाः ।
याभिः संघट्टमासाद्य धूमयानं व्यचाल्यत ॥ २ ॥

सानुगो रभसाघाताद्भ्रान्धिरासीद्विकम्पितः ।
दिष्ट्या न कोऽपि तत्रासीदुद्घाते क्षतमाग्जनः ॥ ३ ॥

दैवान्निवारितेऽनर्थे धूमयानं चलज्जवात् ।
क्लृप्तकालमतीत्याऽगात्सुचिरात्पुण्यपत्तनम् ॥ ४ ॥

अवतीर्याथ मध्याह्ने महात्मा धूमयानतः ।
उज्ज्वलप्रतिभं यानयन्तारमसभाजयत् ॥ ५ ॥

पूर्ववज्जनसन्दोहस्सायं तद्गृहमागतः ।
तमुवाचाऽऽत्मनो भक्तान् समाप्य प्रार्थनामसौ ॥ ६ ॥

रामनाममहिम्नैव भगवत्कृपयापि वा ।
युष्मदग्रे स्थितोऽस्म्यद्य रक्षितः प्राससंकटात् ॥ ७ ॥

गतरात्रौ हि निद्राणो धूमयाने स्थितोऽभवम् ।
निशीथेऽत्याहितं वृत्तं तच्च दैवान्निवारितम् ॥ ८ ॥

अन्तरा कर्जतग्रामं नेरलं लोहवर्त्मनि ।
प्रागेव मूढधीः कश्चिन्न्यक्षिपद् बृहतीं शिलाम् ॥ ९ ॥

यन्त्रसारथिना कृच्छ्रे रक्षितं धैर्यमात्मनः ।
अन्यथा हि रथश्रेणी प्रच्यवेत स्वमार्गतः ॥ १० ॥

इदानीं कः सजीवः स्याद् वार्ता कथयितुं स्वयम् ।
इति को नु विजानीयात्परमेश्वरमन्तरा ॥ ११ ॥

अनिच्छतीश्वरे कोऽपि न जातु बलवानपि ।
हिंसितुं प्रभवेदन्यं तदिच्छा हि नियामिका ॥ १२ ॥

इयच्चिरं जीवतापि न मया कोऽपि पीडितः ।
न जाने किमिति प्राणान्हर्तुमिच्छेज्जनो मम ॥ १३ ॥

ईदृगर्थी अन्यत्रापि प्रवृत्ताः किल भूरिशः ।
भारतेऽपि तथैव स्यादित्यत्र विस्मयः कुतः ॥ १४ ॥

पूर्वेद्युः सप्तमं वारं विपद्दैवान्निवारिता ।
यथा जीवेयमन्यार्थे पञ्चविंशं समाः शतम् ॥ १५ ॥

किं पुनर्बहुभिर्वाक्यैर्दैवे श्रद्धा विधीयताम् ।
अरालं सरलीकर्तुं स एवालं न चापरः ॥ १६ ॥

तस्मिन्नेव क्षणे जातो विप्लवोऽतिभयङ्करः ।
अम्दाबादपुरे नातिदूरं पुण्याश्रमान्मुनेः ॥ १७ ॥

हस्ताहस्ति शिलापातैस्तुमुलश्चातिदारुणः ।
हिन्दूनां मुस्लिमानाञ्च सम्प्रहारो व्यजृम्भत ॥ १८ ॥

राजमार्गास्तथा स्वल्पे वीथिकाश्चोपवीथिकाः ।
मृतक्षतार्धजीवानां व्यकीर्यन्त कलेवरैः ॥ १९ ॥

प्रत्यहं मासपर्यन्तं स्त्रीपुमर्भकवर्ष्मभिः ।
बलिदानमिवाकारि कालाय क्षोभकारिभिः ॥ २० ॥

अथ व्यतिकरे तस्मिन् पुरं प्रेपितवान्मुनिः ।
श्रीमुरार्जिरितिख्यातमादिशन्मन्त्रिणं यथा ॥ २१ ॥

याहि स्थापयितुं शान्तिं मा भैषीर्मरणादपि ।
विप्लवं प्रशमं नीत्वा निवर्तस्वेह जित्वरः ॥ २२ ॥

प्रपश्यन् हन्यसे चेत्त्वं यथा वीराग्रयः पुरा ।
आत्मरक्षामनादृत्य मृत्योरभिमुखे भव ॥ २३ ॥

रक्षिसाहाय्यकापेक्षा ह्रीकरी क्षोभशान्तये ।
आह्वानं सैनिकानां तु ततोऽप्यस्ति त्रपावहम् ॥ २४ ॥

अहो बत स्वराज्यश्रीर्यदा संनिहिता स्थिता ।
तदान्योन्यसमाघाते प्रवृत्ता हिन्दुमुस्लिमाः ॥ २५ ॥

एक एव हि मार्गोऽस्ति तेषां कष्टनिवृत्तये ।
पैशाचभावमुत्सृज्य यतितव्यं प्रशान्तये ॥ २६ ॥

अथ पञ्चगणीशैले दिनानि गमयन्मुनिः ।
लेखं हरिजने पत्रे प्राकाश्यमनयद्यथा ॥ २७ ॥

अम्दाबादपुरे रम्ये गुर्जरावनिमण्डले ।
सप्ताहैर्मलुमिर्घोरो नरध्वंसः प्रवर्तते ॥ २८ ॥

तद्बहिष्ठो न जानाति को नु स्याद् दोषभागिति ।
निर्देष्टुं घातुकं प्रायो नेच्छन्त्येवाधिकारिणः ॥ २९ ॥

नयमेतं समाश्रित्य राष्ट्रसंघीयशासकाः ।
अभिरक्षन्ति मौनित्वं केनाप्युचितहेतुना ॥ ३० ॥

द्वयोरेकतरः पक्षो विरमेद्यदि हिंसनात् ।
स एव शान्तिसम्प्राप्तेरुपायः परमोत्तमः ॥ ३१ ॥

एकदा बन्धुमित्रं मे विपण्यां शैशवे मम ।
चिक्रिये निभृतं भंगामुभाभ्यां प्राशिता च सा ॥ ३२ ॥

क्षयोन्मादान्तपर्यन्तमावाभ्यां हि विलक्षणम् ।
अन्योन्याभिमुखं प्रोच्चैर्हसद्भ्यां बहु चेष्टितम् ॥ ३३ ॥

परेद्युरुपशान्तौ च स्मृत्वा प्राक्तनचेष्टितम् ।
अन्योन्यसंमुखे स्थातुं नाशक्नुव त्रपाकुलौ ॥ ३४ ॥

उपर्युक्तः प्रसंगोऽयं निष्पेदे निरुपद्रवः ।
अम्दाबादपुरोन्मादस्त्वतिक्राम्यति वाक्पथम् ॥ ३५ ॥

विसृष्टास्तरुणैः प्राणा ज्वालानिर्वापणोद्यतैः ।
नालं भवति किं धीरैः प्राणयज्ञः कृतस्त्रिभिः ॥ ३६ ॥

अभविष्यत्प्रशान्तोऽग्निर्वैयं यदि विवेकिनः ।
अशान्तेऽपि त्वसुत्यागो वृथेति न विचिन्तयेत् ॥ ३७ ॥

कर्तव्यस्तादृशो यज्ञस्ततश्चाप्यधिकैर्जनैः ।
यावत्प्रशाम्यति ज्वाला कल्पोऽयं हि प्रशस्यते ॥ ३८ ॥

नोचेत्पक्षद्वयं हन्त गुलिकास्त्रहतिं सहेत ।
कारातिथ्यमियुः केचिद्वधस्तम्मसुखं परे ॥ ३९ ॥

एवं निर्वापितोऽप्यग्निः पुनरुद्दीप्यते ध्रुवम् ।
विक्षोभज्वालया भूयो जनध्वंसं करिष्यति ॥ ४० ॥

शान्तिं प्रत्याहरेयुश्चेद्रक्षिणः सैनिका अपि ।
वर्धेते दास्यमस्माकं पौरुषं चातिहीयते ॥ ४१ ॥

न कोऽपि धार्मिकग्रन्थो ह्यनुशास्ति मिथःकलिम् ।
इति प्राक् कविरिक्बालः सूक्तिरत्नमुदैरयत् ॥ ४२ ॥

सैनिका हि प्रयोक्तव्या भारतस्य प्रशासकैः ।
देशस्य शुद्धिरक्षार्थे क्षेत्राणां कर्षणाय च ॥ ४३ ॥

रक्षिणश्चोपयोक्तव्याश्चौराणां निगृहीतये ।
परं तु नोभयेऽप्येते प्रयोज्याः क्षोभशान्तये ॥ ४४ ॥

त्यजन्तु रक्षिसाहाय्यमम्दाबादनिवासिनः ।
विपत्काले हि धीराणां कातर्यं नोपयुज्यते ॥ ४५ ॥

पापिष्ठास्ते परं धूर्ता ये तु विप्लवकारिणः ।
अतिदुष्टानि कर्माणि तैः क्रियन्ते परोक्षतः ॥ ४६ ॥

विध्यन्ति पृष्ठतो ह्येते प्रायशो न तु वक्षसि ।
नीचकातरहन्तृभ्यस्तादृशेभ्यः कुतो भयम् ॥ ४७ ॥

विरमेयुः स्वयं जाल्माः परप्राणापहारतः ।
इत्याशास्य प्रवीरेण स्थातव्यं मृत्युसंमुखे ॥ ४८ ॥

यदि मृत्योरसौ भीतस्तर्हि विप्लवकारिभिः ।
पौरुषेण प्रयुध्येत स्वात्मानमभिरक्षितुम् ॥ ४९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये आकस्मिकोद्घातो नाम सप्तविंशोऽध्यायः ।



# अष्टाविंशोऽध्यायः

## कल्कत्ताविप्लवः ।

अथ प्रत्यागते तस्मिन् सेवाग्रामं महात्मनि ।
श्रीनेहूरुप्रमुखाः केचिन्नेतारोऽत्र समाययुः ॥ १ ॥

अमात्यैः सूचितं यत्प्रागन्तराभवशासनम् ।
तत्प्रकल्पनसंबद्धाश्चक्रुश्चर्चाः विचक्षणाः ॥ २ ॥

अथाऽमी राज्यभारं तं स्वीचक्रुः संघनायकाः ।
आसीदवसितं सद्यः स्वयंरक्षकशासनम् ॥ ३ ॥

एकीभूय स्थिताः सर्वे सिक्खाः सङ्घस्य नेतृभिः ।
मुस्लिमास्तु निरुत्साहाः स्थिताः संतुष्टयभावतः ॥ ४ ॥

श्रीमाज्जिन्नः समाहूतोऽप्यान्तरालिकशासनात् ।
विमुखः स्थितवानांग्लान्मन्वानः पक्षपातिनः ॥ ५ ॥

ततो मुस्लिमसंघस्य स्वयंनिर्वाहनिश्चयात् ।
महान् विप्लवदावाग्निः कल्कत्तायां समुत्थितः ॥ ६ ॥

दैवासुरं पुरा युद्धं स्मारयत्येष विप्लवः ।
निजघ्नुर्मुस्लिमा हिन्दून् हिन्दवश्चापि मुस्लिमान् ॥ ७ ॥

निपेतुरुभयेऽप्यार्ताः शतशश्च सहस्रशः ।
अविच्छिन्नतया वृत्ते संप्रहारेऽतिदारुणे ॥ ८ ॥

निर्गता रक्तवाहिन्यः प्रसस्रुः सर्वतः पुरे ।
भूयिष्ठासु च रथ्यासु राशीभूय स्थिताः शवाः ॥ ९ ॥

स्त्रीबालवृद्धलोकानां निरस्तानां निजालयात् ।
मर्माविधा वियुक्तानां शुश्रुवे परिदेवना ॥ १० ॥

अनाथाः शिशवो दैवाद्रक्षिताः साश्रुलोचनाः ।
अत्याहितकथाः शत्रोरूचुर्म्लिष्टार्धवाक्यतः ॥ ११ ॥

विलपन्त्योऽङ्गनाः काश्चिद्वर्णयामासुरस्फुटम् ।
शिशूनां खण्डशश्छेदं हन्त साक्षाद्विलोकितम् ॥ १२ ॥

मन्दिरे पश्यतां पुंसां कचित्पुत्री कचित्स्नुषा ।
बलात्प्रधर्षिता नीचैरपजह्रे निवासतः ॥ १३ ॥

वदन्ति स्म कथाः काश्चिद्वधानां मर्मकृन्तनीः ।
पितामहपितापुत्रपौत्राणां युगपत्क्षणात् ॥ १४ ॥

गृहा भस्मीकृताः केचिच्छतशोऽन्ये विलुण्ठिताः ।
असंख्या नष्टसर्वस्वा जनास्तस्थुर्मुमूर्षवः ॥ १५ ॥

अग्न्यस्त्रगुलिकाक्षेपे कृतेऽपि पुररक्षकैः ।
न लुण्ठनवधादिभ्यो विरेमुः क्षोभकारिणः ॥ १६ ॥

या प्रासादमयी रम्या कल्कत्तानगरी पुरा ।
सेदानीं प्रतिभाति स्म साक्षात्प्रेतपुरी यथा ॥ १७ ॥

विप्लवेऽष्टौ सहस्राणि धर्मराजः शरीरिणाम् ।
सादरं परिजग्राह निजातिथ्याय भूयसे ॥ १८ ॥

नष्टेष्वथ सहस्रेषु सम्राट्प्रतिनिधिर्द्रुतम् ।
राजधानीमुपागन्तुं वंगाधिपतिमाह्वयत् ॥ १९ ॥

चिरं तेन समालोच्य प्रस्तुतं विषयं ततः ।
राजप्रतिनिधिः शीघ्रं कल्कत्तानगरीं ययौ ॥ २० ॥

सप्ताहाभ्यन्तरे भूयः क्षोभोऽजनि भयङ्करः ।
पृथङ्मोहमयीमध्ये ध्वजोत्थापनकारणात् ॥ २१ ॥

निजवैमत्यमाख्यातुमन्तरामवशाम्यने ।
कृष्णध्वजकरा रथ्याभिरटू रथ्यासु मुस्लिमाः ॥ २२ ॥

गोलपीठाभिधस्थानेऽभ्युषिते हिन्दुमुस्लिमैः ।
हिन्दवो ध्वजमुत्थाप्य बभूवुः क्षोभहेतवः ॥ २३ ॥

प्रवृत्तं तुमुलं युद्धं शतशो लुण्ठिता गृहाः ।
भस्मसाच्च कृतं क्षुब्धैरेकं संग्रामवाहनम् ॥ २४ ॥

सार्वलौकिकयानेषु स्तम्भीभूतेषु सर्वतः ।
संत्रासाद्गिहतो लोका न सञ्चेलुः कचिद्बहिः ॥ २५ ॥

अग्न्यस्त्रगुलिकाक्षेपे कृतेऽपि पुररक्षकैः ।
सार्धैकमासपर्यन्तं विरराम न विप्लवः ॥ २६ ॥

तदात्वे राज्यभारस्य प्रारेभे नूतनक्रमः ।
स्वराज्यस्य महाद्वारं दिव्यमुद्घाटितं तदा ॥ २७ ॥

अभिनन्द्य शुभैरुक्तैः राज्यतन्त्रप्रतिष्ठितिम् ।
सानन्दमब्रवीत्सायं महात्मा प्रार्थनोत्तरम् ॥ २८ ॥

बहुवर्षाण्यहोरात्रं सोढ्वा क्लेशपरम्पराम् ।
भारतीयाश्चिरादेतत्प्रत्यैक्षन्त दिनं शुभम् ॥ २९ ॥

प्राक्तनः कलहोऽस्माकमांग्लराज्येन तिष्ठतु ।
निर्व्याजः प्रत्ययस्त्वेषामभिनन्दनमर्हति ॥ ३० ॥

श्रीनेहरुप्रमुखैर्देशो मन्त्रिभिः सेव्यते यदा ।
पूर्णस्वतन्त्रतालक्ष्मीरुपैष्यति न संशयः ॥ ३१ ॥

भारतस्येतिहासेऽयं स्मरणीयोऽपि वासरः ।
हर्षान्नाराधनीयोऽसौ भोज्यदीपोत्सवादिभिः ॥ ३२ ॥

सकण्टककिरीटानि धारयन्तीव मन्त्रिणः ।
महोन्नतपदं राज्ये स्वीकृत्य नवकल्पिते ॥ ३३ ॥

दूये मुस्लिमसंघीयास्तिष्ठन्ति विमुखा इति ।
अस्मज्जन्मभुवो जातास्ते हि नः सन्ति सोदराः ॥ ३४ ॥

प्राहुर्मुस्लिमसंघीया हिन्दुभिर्वञ्चिता वयम् ।
दिनमेतदतोऽस्माकं विलापदिनमीर्यते ॥ ३५ ॥

किं नामापकृतं तेषां हिन्दुभिर्यज्जना इमे ।
ब्रुवाणा अहितान् हिन्दून् भवन्ति परिपन्थिनः ॥ ३६ ॥

विद्वेषोऽयमहो कस्मात्क्रियते सोदरेष्वपि ।
नैतदिस्लामधर्मस्य क्वाप्येवमनुशासनम् ॥ ३७ ॥

अखण्डभारतस्यापि सम्पादयितुमिच्छया ।
स्वातन्त्र्यं राष्ट्रसंघोऽयं स्वीचक्रे नवशासनम् ॥ ३८ ॥

इदं व्यनक्ति धीमत्त्वं प्रजासत्ताभिरक्षिताम् ।
मानुष्यकेऽनुकम्पां च राष्ट्रसंघगुणत्रयम् ॥ ३९ ॥

मन्यन्ते यवनादेयं मुस्लिमाः शासनं नवम् ।
तन्मतं वितथीकुर्युः शासकाः सत्यवर्तनैः ॥ ४० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये कल्कत्ताविप्लवो नामाऽष्टाविंशतितमोऽध्यायः ।



# एकोनत्रिंशोऽध्यायः

## श्रीगान्धिजन्मोत्सवः ।

अथ श्रीगान्धिनाऽऽसायां शरदामष्टसप्ततौ ।
विधीयते स्म सर्वत्र तस्य जन्मदिनोत्सवः ॥ १ ॥

मङ्गलेऽहनि लोकानामुत्साहोऽभूदनुत्तमः ।
सन्निकृष्टे स्वराज्ये तद्दीर्घश्रमफलायिते ॥ २ ॥

स्वभावान्निरहंकारः श्रीगान्धिस्तद्दिनं शुभम् ।
स्वयमाकारयामास चरखोत्सववासरम् ॥ ३ ॥

लोकांश्च प्रार्थयामास दिनेऽस्मिन्दैनिकोद्यमः ।
युष्माभिः खादिनिर्माणे द्विगुणीक्रियतामिति ॥ ४ ॥

तदेतत्तान्तवं नृणां कर्मणो वक्ति गौरवम् ।
समत्वं चाढ्यदीनानामित्यमून्प्रोदसाहयत् ॥ ५ ॥

दिनेऽस्मिन्नेहरुराजेन्द्रप्रसादप्रमुखैरपि ।
विदधे तान्तवो यज्ञः सूत्रनिर्माणतत्परैः ॥ ६ ॥

जगन्नेत्रसमाकर्षी तापसोऽयं साबरमतेः ।
प्रजाराज्यसमारम्भं वत्सरान्ते व्यलोकयत् ॥ ७ ॥

वयसाऽशीतिमप्राप्तो भवेत्पूर्णमनोरथः ।
इति स्वदेशजाः सर्वे प्रतीक्षाञ्चक्रिरे जनाः ॥ ८ ॥

परं तु विजयोत्साहस्तेषां विप्रकृतोऽभवत् ।
प्रचण्डक्षोभसम्भूत्या जातिद्वेषसमुत्थया ॥ ९ ॥

सुदीर्घपारतन्त्र्यस्य बहुकुत्सितलक्षणैः ।
जनितः परिपाकोऽयं परिहार्यः कथं भवेत् ॥ १० ॥

वत्सरेभ्यो बहुभ्यः प्रागासीदेष महामुनिः ।
मुस्लिमानां च हिन्दूनामैक्यसम्पादने रतः ॥ ११ ॥

अयमेव हि हिन्दूनां प्रथमो देशनायकः ।
योऽभून्मुस्लिमकोटीनां भक्तिविश्वासभाजनम् ॥ १२ ॥

लभेत यदि संसिद्धिमैक्यसम्पादनोद्यमे ।
कृतकृत्यं किलात्मानमसौ मन्येत जीवने ॥ १३ ॥

स्वकर्तव्यमिदं जानन् दिल्ल्यां तावदयं स्थितः ।
राजप्रतिनिधिश्चक्रे यावज्जिन्नेन भाषणम् ॥ १४ ॥

मुनौ मुस्लिमसंघस्य हितैषिणि सदा स्थिते ।
तस्य वाचोविधेयः स्याद्राष्ट्रसंघोऽप्यसंशयम् ॥ १५ ॥

दीनानां दीनदीनेपि कारुण्यं गाढमातनोत् ।
तेनैव सममात्मानं मेने सर्वात्मना च सः ॥ १६ ॥

ईदृशैर्जीवनं तस्य गुणरत्नैरलङ्कृतम् ।
सरलं व्रतकल्पं च शाश्वतीमर्हति स्मृतिम् ॥ १७ ॥

इति सौ. क्षमायाः-कृतिषु श्रीगान्धिजन्मोत्सवो नाम
एकोनत्रिंशोऽध्यायः ।



# त्रिंशोऽध्यायः

## विदर्भविप्लवः ।

अत्रान्तरे जनक्षोभो मोहमय्यामवर्धत ।
केनचिन्निर्मिमे ग्राम्यं चम्भास्त्रं निभृतं क्वचित् ॥ १ ॥

सहसा तच्च पुस्फोट घोरध्वानकरं पुरे ।
व्यक्षिपज्ज्वलनज्वालाः सर्वतश्च भयङ्कराः ॥ २ ॥

पुरुषा योषितो बाला निर्दग्धा बहवो मृताः ।
तूलरक्षागृहाः सिन्नीप्रदेशे भस्मसात्कृताः ॥ ३ ॥

कल्कत्तानगरे क्षोभवह्निर्योऽभूत्समुत्थितः ।
मुस्लिमैस्तत्र हिन्दूनां सहस्राणि निजघ्निरे ॥ ४ ॥

निहतानां च भूयिष्ठा बभूवुस्ते विदर्भजाः ।
अतस्तद्बन्धुमित्राणि विदर्भेषु क्रुधाऽज्वलन् ॥ ५ ॥

ढाकादिनगरेष्वेते प्रतीकारपरायणाः ।
मुस्लिमानामशेषाणां विध्वंसं विदधुः क्षणात् ॥ ६ ॥

अथ मुस्लिमभूयिष्ठे नवकालीति विश्रुते ।
नगरे घोरविक्षोभः सहसाभूत्समुत्थितः ॥ ७ ॥

मुस्लिमा नवकालीस्था हिन्दूनां क्रूरकर्मभिः ।
संक्रुद्धाः समजायन्त तच्छोणितपिपासवः ॥ ८ ॥

नवकालीपुराद्दूरे क्रोशानां पञ्चविंशतौ ।
क्षणाद्विचूर्णिताः खड्गैर्हिन्दवः पुरवासिनः ॥ ९ ॥

भस्मीकृता गृहास्तेषां योषितश्च हृता बलात् ।
जातिधर्मं परित्याज्य मुस्लिमैः परिणायिताः ॥ १० ॥

अदृष्टश्रुतपूर्वेऽस्मिन् विप्लवेऽतिभयङ्करे ।
ददृशे दहनज्वाला पुरात्क्रोशं विदूरतः ॥ ११ ॥

सप्ताहाभ्यन्तरे गान्धिरश्रुपूर्णाकुलेक्षणः ।
प्रार्थनोर्ध्वं जनान् सायं निजगाद सगद्गदम् ॥ १२ ॥

" निशम्यानिष्टवृत्तान्तान् विदर्भावनिसंभवान् ।
मद्वदेव विदूनः स्याज्जनोऽत्रेति न संशयः ॥ १३ ॥

प्रवाहात्कामरूपेषु विनेशुः शतशो जनाः ।
अन्ये सहस्रशो लोका बभूवुश्च निराश्रयाः ॥ १४ ॥

स त्वाधिदैविकस्तापः परिहार्यो न मानवैः ।
प्राच्यवंगेषु यद्वृत्तं तन्मनुष्यविचेष्टितम् ॥ १५ ॥

न वर्णयितुमिच्छामि वृत्तमश्रव्यविस्तरम् ।
मद्वाक्ये मन्दविश्वासाः सम्प्रति प्रायशो जनाः ॥ १६ ॥

तथापि निजकर्तव्यमित्यमून् वक्तुमुत्सहे ।
शृण्वन्तु वा न शृण्वन्तु चिन्ता मे नास्ति लेशतः ॥ १७ ॥

नैस्तमुस्लिमहिन्दूनां न कदापि परस्परम् ।
भेदः कृतो मया ह्येते सर्वेऽपि मम सोदराः ॥ १८ ॥

एकस्या एव सम्भूता जन्मभूमेरमी समे ।
अपत्यानि कुटुम्बस्याप्येकस्यैव भवन्ति हि ॥ १९ ॥

परं तु भ्रातरो दृष्टा युध्यमानाः परस्परम् ।
यथा चण्डक्रुधा पूर्वं कौरवाः सह पाण्डवैः ॥ २० ॥

तथैवाद्यतने काले जना विस्मृत्य बन्धुताम् ।
द्वेषोन्मादपराभूताः प्रवृत्ता दारुणे रणे ॥ २१ ॥

कलकत्तायामसृक्प्लावं विदर्भपुरमारणम् ।
नवकाल्यां वधं घोरं श्रुत्वा जीवन्मृतोस्म्यहम् ॥ २२ ॥

विपद्वार्ताभिभूताय विमूढमतिपत्तये ।
भगवानेव मे मार्गं सङ्कटे दर्शयिष्यति ॥ २३ ॥

# त्रिंशोऽध्यायः
## विद्‌र्भविप्लवः ।

अत्रान्तरे जनक्षोभो मोहमय्यामवर्धत ।
केनचिन्निर्ममे ग्राम्यं बम्भास्त्रं निभृतं क्वचित् ॥ १ ॥

सहसा तच्च पुस्फोट घोरध्वानकरं पुरे ।
व्यक्षिपज्ज्वलनज्वालाः सर्वतश्च भयङ्कराः ॥ २ ॥

पुरुषा योषितो बाला निर्दग्धा बहवो मृताः ।
तूलरक्षागृहाः सिन्ध्रीप्रदेशे भस्मसात्कृताः ॥ ३ ॥

कल्कत्तानगरे क्षोभवह्निर्योऽभूत्समुत्थितः ।
मुस्लिमैस्तत्र हिन्दूनां सहस्राणि निजघ्निरे ॥ ४ ॥

निहतानां च भूयिष्ठा बभूवुस्ते विदर्भजाः ।
अतस्तद्बन्धुमित्राणि विदर्भेषु क्रुधाऽज्वलन् ॥ ५ ॥

ढाकादिनगरेष्वेते प्रतीकारपरायणाः ।
मुस्लिमानामशेषाणां विध्वंसं विदधुः क्षणात् ॥ ६ ॥

अथ मुस्लिमभूयिष्ठे नवकालीति विश्रुते ।
नगरे घोरविक्षोभः सहसाभूत्समुत्थितः ॥ ७ ॥

मुस्लिमा नवकालीस्था हिन्दूनां क्रूरकर्मभिः ।
संक्रुद्धाः समजायन्त तच्छोणितपिपासवः ॥ ८ ॥

नवकालीपुराद्दूरे क्रोशानां पञ्चविंशतौ ।
क्षणाद्विचूर्णिताः खड्गैर्हिन्दवः पुरवासिनः ॥ ९ ॥

भस्मीकृता गृहास्तेषां योषितश्च हृता बलात् ।
जातिधर्मं परित्याज्य मुस्लिमैः परिणायिताः ॥ १० ॥

अदृष्टश्रुतपूर्वेऽस्मिन् विप्लवेऽतिभयङ्करे ।
ददृशे दहनज्वाला पुरात्क्रोशं विदूरतः ॥ ११ ॥

सप्ताहाभ्यन्तरे गान्धिरश्रुपूर्णाकुलेक्षणः ।
प्रार्थनोर्ध्वं जनान् सायं निजगाद सगद्गदम् ॥ १२ ॥

" निशम्यानिष्टवृत्तान्तान् विदर्भावनिसंभवान् ।
मद्वदेव विदूनः स्याज्जनोऽन्येति न संशयः ॥ १३ ॥

प्रवाहात्कामरूपेषु विनेशुः शतशो जनाः ।
अन्ये सहस्रशो लोका बभूवुश्च निराश्रयाः ॥ १४ ॥

स स्वाधिदैविकस्तापः परिहार्यो न मानवैः ।
प्राच्यवंगेषु यद्वृत्तं तन्मनुष्यविचेष्टितम् ॥ १५ ॥

न वर्णयितुमिच्छामि वृत्तमश्राव्यविस्तरम् ।
मद्वाक्ये मन्दविश्वासाः सम्प्रति प्रायशो जनाः ॥ १६ ॥

तथापि निजकर्तव्यमित्यमून् वक्तुमुत्सहे ।
शृण्वन्तु वा न शृण्वन्तु चिन्ता मे नास्ति लेशतः ॥ १७ ॥

कैस्तमुस्लिमहिन्दूनां न कदापि परस्परम् ।
भेदः कृतो मया ह्येते सर्वेऽपि मम सोदराः ॥ १८ ॥

एकस्या एव सम्भूता जन्मभूमेरमी समे ।
अपत्यानि कुटुम्बस्याप्येकस्येव भवन्ति हि ॥ १९ ॥

पर तु भ्रातरो दृष्टा युध्यमानाः परस्परम् ।
यथा चण्डक्रुधा पूर्वं कौरवाः सह पाण्डवैः ॥ २० ॥

तथैवाद्यतने काले जना विस्मृत्य बन्धुताम् ।
द्वेषोन्मादपराभूताः प्रवृत्ता दारुणे रणे ॥ २१ ॥

कल्लकत्तायामसृक्प्लावं विदर्भेपूग्रमारणम् ।
नवकाल्यां वधं घोरं श्रुत्वा जीवन्मृतोस्म्यहम् ॥ २२ ॥

विपद्वार्ताभिभूताय विमूढप्रतिपत्तये ।
भगवानेव मे मार्गं सङ्कटे दर्शयिष्यति ॥ २३ ॥

हिन्दुभिर्नवकालीस्थैर्मुस्लिमेष्वपकारिषु ।
न विद्वेषविषं धार्य चेतसा जातु सर्वथा ॥ २४ ॥

अहिंसा राष्ट्रसंघस्य धर्मसारं चिरात्स्थितम् ।
संनिकृष्टस्तथैवासीदस्मत्प्राप्यमनोरथः ॥ २५ ॥

आंग्लेषु सा प्रयुक्ताऽऽसीदुपायत्वेन केवलम् ।
हिंसैव नः फलायेति मन्यते किं जनोऽथवा ॥ २६ ॥

राष्ट्रसंघजनैः सर्वैः शिक्षितं दीर्घकालतः ।
परहिंसामकृत्वैव मर्तुं धैर्यमुपाश्रितैः ॥ २७ ॥

नास्त्येवान्यतरोपायः समापयितुमीदृशम् ।
विग्रहं यत्र हन्यन्ते पितरोऽपि क्रुधा जनैः ॥ २८ ॥

तैरेभिर्गन्तुमभ्यस्तं निर्भीत्या बन्धनालयम् ।
न तु हिंसामकृत्वैव मर्तुमद्यापि शिक्षितम् ॥ २९ ॥

बद्धश्रद्धा अहिंसायां शिक्षयेयुर्जना अमून् ।
स्वकीयाचरणेनैव मार्गमेतमनुत्तमम् ॥ ३० ॥

अद्यप्रभृति नान्योन्यं हिंसिष्याम इति ध्रुवम् ।
प्रतिज्ञां कर्तुमर्हन्ति सार्जवं हिन्दुमुस्लिमाः ॥ ३१ ॥

अन्यथाऽहं गृहाग्रेभ्यः कारयिष्यामि घोषणाम् ।
स्वातन्त्र्यमद्य न प्राप्तं प्राप्स्यते न च जात्विति ॥ ३२ ॥

न हि स्वातन्त्र्यमर्हन्ति जगत्यां पशुवृत्तयः ।
पशुवृत्त्यैव ते दासा जज्ञिरेऽक्षयवंशजाः ॥ ३३ ॥

आश्रितः पाशवीं वृत्तिं सार्वभौमोऽपि रावणः
निजघ्ने नष्टसर्वस्वस्तदीया दासतां ययुः ” ॥ ३४ ॥

अत्रान्तरे दिवानक्तं संदेशाः शब्दयन्त्रतः ।
प्राप्ता वंगप्रदेशेभ्यो मुनेरादेशकाङ्क्षया ॥ ३५ ॥

विप्लवाग्निरसंख्यानां विदर्भावनिमण्डले ।
नराणामाददे प्राणानाहुतीरतिघस्मरः ॥ ३६ ॥

स्त्रीपुमर्भकवृन्दानामसंख्यानां निरागसाम् ।
चक्रे निबर्हणं दुष्टैर्विविधास्त्रप्रयोगतः ॥ ३७ ॥

प्राहिणोत्स सुधीराख्यं प्राच्यवंगावनौ मुनिः ।
विप्लवव्यथितान् देशान्नवकालीं विशेषतः ॥ ३८ ॥

आदिशच्च परीक्षस्व सम्यग् देशपरिस्थितिम् ।
निवृत्याऽऽशु च मे वार्तां निवेदय यथायथम् ॥ ३९ ॥

इत्युक्तः प्रथमं प्राच्यवंगानासादयद्युवा ।
नवकालीं गतः श्रीमत्कृपलानीसमन्वितः ॥ ४० ॥

कामिला-त्रिपुरादिभ्यः संत्रस्तैः शरणार्थिभिः ।
कल्कत्तानगरी नृणां सहस्रैः समपूर्यत ॥ ४१ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये विदर्भविप्लवो नाम त्रिंशत्तमोऽध्यायः ।



# एकत्रिंशोऽध्यायः

## श्रीगान्धेः कल्कत्ताप्रस्थानम् ।

आसीदत्रान्तरे क्षोभो वङ्गान्तरधिकाधिकः ।
नीचाः प्रायुञ्जत स्वैरमग्न्यस्त्राणि शरानपि ॥ १ ॥

कदाचिन्नगरीमध्ये बम्भास्त्राणि प्रचिक्षिपुः ।
अन्यदाम्लद्रवक्षेपैरन्धीचक्रुर्जनान्बहून् ॥ २ ॥

कृतेऽग्न्यस्त्रप्रहारेऽपि कल्कत्तापुररक्षिभिः ।
न विरेमुर्नृणां हत्या गृहदाहाश्च लुण्ठनाः ॥ ३ ॥

प्रतिरुध्य क्वचिद्धूमयानान्यक्रमकूटगैः ।
निहताः केचिदध्वन्याः केचिदन्ये च लुण्ठिताः ॥ ४ ॥

उदन्तमेतमाकर्ण्य दुःखितात्माऽब्रवीन्मुनिः ।
सायं प्रस्थानतः पूर्वं कल्कत्तानगरं प्रति ॥ ५ ॥

अपकारप्रतीकारस्पृहा साहाय्यमार्गणम् ।
देशप्रभोः सकाशाच्च स्वातन्त्र्येण विरुध्यते ॥ ६ ॥

जनताहृदयादेव शाश्वती शान्तिरेष्यति ।
स्वस्वचेतोबलेनैव रक्ष्यते ह्यखिलो जनः ॥ ७ ॥

नापमानः स्पृशेद्वीरं न च धीरमनादरः ।
दुर्जनस्य स्वभावोऽयमपकारे प्रतिक्रिया ॥ ८ ॥

यदि कश्चन मां हन्यात्तदा मदपकारिणम् ।
प्रतीकारधिया हत्वा न किंचित्फलमाप्यते ॥ ९ ॥

वित्त गान्धि विना कोऽपि हन्तुं गान्धि न पारयेत् ।
अविनश्वरमात्मानं को वा नाशयितुं प्रभुः ॥ १० ॥

प्रतीकारधियस्तस्माद्विनिष्कास्या हृदन्तरात् ।
स्वातन्त्र्यं प्रति वः शक्या तदा हि त्वरिता गतिः ॥ ११ ॥

बाल्यशिक्षानुरोधेन यदसत्तन्न मे प्रियम् ।
असत्कर्ता न मे द्वेष्यः स तावत्प्रिय एव मे ॥ १२ ॥

हिन्दूनां श्रुतयः प्राहुः क्षमा हि परमो गुणः ।
किञ्च साऽलङ्कृतिर्योग्या राजते धीरचेतसः ॥ १३ ॥

परेद्युर्मुस्लिमः कश्चित्पण्डितो मे न्यवेदयत् ।
यदिस्लामश्रुतौ प्रोक्तं समानमनुशासनम् ॥ १४ ॥

यदि कश्चिद्दुराचारो हन्यादनपराधिनम् ।
वहेत्सर्वसमाजस्य पापभारं स मस्तके ॥ १५ ॥

चपेटेन प्रहर्तारं न क्षमेत जनो यदि ।
स तस्मै तत्क्षणं दद्यात्स्वैरं प्रतिचपेटिकाम् ॥ १६ ॥

पलायिते तु जाल्मेऽस्मिन् यद्यसौ ताडयेज्जनः ।
तदीयबान्धवान्क्रोधात्सा नृजन्मविडम्बना ॥ १७ ॥

कन्यामपहरेत्तस्य दुर्जनो यदि कश्चन ।
तत्पत्नीं मित्रकन्यां वा नापहर्तुं हि युज्यते ॥ १८ ॥

शत्रुणा पीतरक्तस्य या तृष्णा शत्रुशोणिते ।
पाशवीं तामहं मन्ये नराणामयशस्करीम् ॥ १९ ॥

अपकारप्रतीकारो महाभारतसंमतः ।
इति प्राहुर्जनाः केचिदन्यथाऽहं तु भावये ॥ २० ॥

खड्गेन विजयस्तावद्विजयो नास्ति वस्तुतः ।
पाण्डवानां जयो नाम शून्यकल्पो निदर्शितः ॥ २१ ॥

परिपुष्येदतः कृत्स्नजगता सह सौहृदम् ।
किञ्च मानुष्यकं सर्वं गणयेत्स्वकुटुम्बकम् ॥ २२ ॥

इति श्री. क्षमायाः कृतिषु स्वराज्यविजये श्रीगान्धेः कलकत्ताप्रस्थानं नाम एकत्रिंशोऽध्यायः ।

## द्वात्रिंशोऽध्यायः

### गान्धिप्रधर्षणम् ।

याति दिल्लीपुराद्गान्धौ कलकत्तानगरीं प्रति ।
धूमयानप्रकोष्ठेऽस्य शिलाः केचित्प्रचिक्षिपुः ॥ १ ॥

तदा निजासने तत्र ध्यानमग्नः स्थितो मुनिः ।
दैवाल्लक्ष्यच्युतिर्जाता सानुगश्च सुरक्षितः ॥ २ ॥

कलकत्तानगरं प्राप्य प्रदोषप्रार्थनोत्तरम् ।
मिलितान् वंगदेशीयान् प्रतीतः सोऽब्रवीद्यथा ॥ ३ ॥

" इदं मे यौवनारम्भादेव कार्यतया स्थितम् ।
यद् द्वयोरपि संधानं कलहायितपक्षयोः ॥ ४ ॥

ततोऽहमाफ्रिकादेशे न्यायवादित्वमाचरन् ।
एकीकर्तुमुभौ पक्षौ प्रायते व्यवहारिणौ ॥ ५ ॥

हिंदुमुस्लिमयोस्तस्मादैक्यसंस्थापने पुनः ।
आशाङ्कुरः समुत्पन्नो हृदये मे प्रकाशते ॥ ६ ॥

प्रार्थयेऽहं प्रमाथोऽयमन्योन्यो विरमेद् द्रुतम् ।
एकीभूय समाजौ च भवेतामेकमानसौ ॥ ७ ॥

अखण्डस्थापनं किं वा भारतस्य विभाजनम् ।
कार्यमन्योन्यसंमत्या बलात्कारान्न शक्यते " ॥ ८ ॥

श्रीराजेन्द्रप्रसादोऽथ घोषणां पाटलीपुरे ।
चकार यन्महात्माऽसौ स्वप्रतिज्ञानुरोधतः ॥ ९ ॥

प्रायमासिष्यते क्षोभो न शाम्येद्यदि वासरात् ।
इत्याकर्ण्य जनाः केचित्तूष्णीकमवतस्थिरे ॥ १० ॥

परं तु पाटलीपुत्रे मङ्गेरे च गयादिषु ।
जनक्षोभदशात्यन्तं भयोद्वेगकरी स्थिता ॥ ११ ॥

सरायीनामनि ग्रामे समाक्रान्ते विलुण्ठकैः ।
ररक्षुर्हिन्दवो धीरा मुस्लिमान्ग्रामवासिनः ॥ १२ ॥

निष्कासितेषु जाल्मेषु ग्रामाद्विक्रम्य हिन्दुभिः ।
विश्रब्धा मुस्लिमास्त्यक्तुं नैच्छन् ग्रामटिकां निजाम् ॥ १३ ॥

समकण्ठं च तत्रत्या हिन्दवः प्रतिजज्ञिरे ।
रक्षितुं संकटात्सर्वान्मुस्लिमान् प्रातिवेशिकान् ॥ १४ ॥

नवखालीपुरं यास्यन्महात्मा नौकयाऽध्वनि ।
गोलण्डाख्यपुरेऽपश्यज्जनौघं दर्शनोत्सुकम् ॥ १५ ॥

महात्मा नौतलादेव तान् लोकान् समबोधयत् ।
चकर्ष च मनस्तेषां तद्वाचोयुक्तिपाटवम् ॥ १६ ॥

( गान्धिरुवाच । )

अयि भो आगतोऽस्म्यत्र युष्माभिः समदुःखभाक् ।
नवखाल्यां प्रतिग्रामं गन्तुमिच्छाम्यहं स्वयम् ॥ १७ ॥

आश्वासयितुमिच्छामि क्षताङ्गान् मन्दभागिनः ।
तथा प्रमार्ष्टुमन्येषामश्रूणि व्यथितात्मनाम् ॥ १८ ॥

प्रतीकारवैरैर्नित्यं युष्माभिः कलहायिते ।
हिन्दुमुस्लिमयोर्धर्मौ सर्वथा ध्वंसमेष्यतः ॥ १९ ॥

यद्विदर्भेषु संवृत्तं पापिष्ठमचिरादितः ।
तज्जगत्यां हि धर्मेण न केनाप्यनुमोद्यते ॥ २० ॥

तच्च मुस्लिमशिक्षार्थं व्यधायीति ब्रवीति यः ।
स नूनं मूढधीरेव प्रमत्तश्च न संशयः ॥ २१ ॥

विहारविषयेणोग्रैर्दुष्कृतैरयशस्करैः ।
दूषितं भारतस्याद्य नाम वंगभुवा यथा ॥ २२ ॥

स्वैरं हरत मे प्राणान्न तु स्पृशत मुस्लिमान् ।
इत्युक्ता हि विदर्भीयाः पुरा पण्डितनेहरुणा ॥ २३ ॥

अथ सैनिकसाहाय्यात् क्षोभश्चेदुपशाम्यते ।
कविका राज्यभारस्य राजप्रतिनिधिं मजेत् ॥ २४ ॥

यदि सप्तसहस्राणि मुस्लिमानां दुरात्मनाम् ।
आस्कन्द्य स्वल्पसंख्याकान् हिन्दून् स्वप्रातिवेशिकान् ॥ २५ ॥

विलुण्ठेयुर्गृहांस्तेषां हरेयुश्चाङ्गना बलात् ।
तदा तैर्नूनमिस्लामधर्मः स्याद्विनिपातितः ॥ २६ ॥

यावदेकीभविष्यन्ति पुनस्ते हिन्दुमुस्लिमाः ।
तावदत्रैव वङ्गेषु स्थास्यामि हितकाम्यया ॥ २७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये गान्धि-
प्रघर्षणं नाम द्वात्रिंशत्तमोऽध्यायः ।



# त्रयस्त्रिंशोऽध्यायः

## नवखालीप्रयाणम् ।

नवखालीं प्रयास्यन्तं किनीनाम्न्याऽथ नौकया ।
लेखकोऽमेरिकावासी मुनिमाह सहाध्वगः ॥ १ ॥

'महात्मन् पञ्चवर्षाणि देशोऽयं क्षोभपीडितः ।
कचिन्नौकाधिकारिभ्यः कचिद्राष्ट्रियसैन्यतः ॥ २ ॥

कचिन्मुस्लिमहिन्दुभ्यः कचिदन्यैश्च कारणैः ।
सत्यमेवं ब्रूहि मे विद्वन्यदहिंसामतं तव ॥ ३ ॥

तदेतद्दृढमूलं वा भवद्देशेऽद्य वर्तते ।
अथ वा निष्फलं भूत्वा प्रजाभिः परिवर्जितम्' ॥ ४ ॥

(महात्मा प्रत्युवाच ।)

'यत्त्वयाऽभिहितं सौम्य हिंसाख्यां नूनमर्हति ।
अहिंसा निष्फलाऽद्येति निश्चितुं न हि युज्यते ॥ ५ ॥

परिवर्तयितुं प्रायो जनसामान्यमानसम् ।
नोपलब्धं मयाऽद्यापि कौशल्यं यदपेक्षितम् ॥ ६ ॥

ग्रामाणां सप्तलक्षाणि यानि तेषां निवासिभिः ।
हिंसनं यत्त्वया प्रोक्तं प्रतिजाने न तत्कृतम् ॥ ७ ॥

अहिंसा दृढमूलाऽभून्न वेति भरतावनौ ।
निर्णेतुं पारयेल्लोको मदीयनिधनोत्तरम्' ॥ ८ ॥

(पान्थः पप्रच्छ ।)

द्वितीयं ब्रूहि तावत्किं कुर्याद्दैनिकजीवने ।
अहिंसायाः प्रवीरस्य क्रमेण प्राप्तये नरः ॥ ९ ॥

( महात्मोवाच । )

" वीरयोग्यामहिंसां यो नरः शिक्षितुमिच्छति ।
निरस्येत्स हि कातर्यमाचरेच्चानुगुण्यतः ॥ १० ॥

अहिंसोपासको भीतिं त्यजेदुच्चाधिकारिणः ।
अकोपश्च परित्यक्तुं सज्जितः स्यान्निजं पदम् ॥ ११ ॥

स्वामिना नष्टसर्वस्वोऽप्यस्मै चेन्न हि कुप्यति ।
सिद्धवीरोचिताहिंसः प्रोच्यतेऽसौ तदा व्रती ॥ १२ ॥

तर्जयेदध्वगः कश्चित्प्रहर्तुं मत्सुतं यदि ।
अनुनेतुं यतिष्ये तं पुत्रस्य क्षेमचिन्तकः ॥ १३ ॥

बलवत्ताडितस्तेन न कोपं प्राप्नुयां यदि ।
मया वीरोचिताऽहिंसा तदा हि स्यात्प्रदर्शिता ॥ १४ ॥

सर्वथा नियतामर्षः प्रहारविमुखोऽस्मि चेत् ।
प्रयाति परिपुष्टिं मे वीरोचितमहिंसनम् ॥ १५ ॥

अहिंसा तादृशी क्वापि मोघार्था न भविष्यति ।
येषां प्रबलवैमत्यं तेऽपि तत्सारवेदिनः " ॥ १६ ॥

आंग्लैकादशमासस्य पूर्वार्धे गतवान्मुनिः ।
चौमुहान्यभिधं ग्रामं नवकालीपुरान्तिके ॥ १७ ॥

अगमत्स इतो ग्रामान् देशस्याभ्यन्तरान् बहून् ।
पत्रसंपादकैः सार्धमात्मनश्चानुयायिभिः ॥ १८ ॥

तदात्वे तस्य चाहारो नारिकेलजलं परम् ।
नारङ्गस्य रसश्चासीत्तेनासौ कृशतां ययौ ॥ १९ ॥

अत्रान्तरेऽभवत्प्राच्यवंगदेशे समन्ततः ।
अमानुषैर्दुराचारैः शोचनीया परिस्थितिः ॥ २० ॥

योषितः शरणार्थिन्यः समेत्याश्रयमन्दिरम् ।
सबाष्पं कथयामासुर्निजक्लेशपरम्पराम् ॥ २१ ॥

हन्यमानान् पतीन् काश्चिदन्याश्च पितरौ निजौ ।
अद्राक्षुः स्वशिशून् काश्चिच्छिद्यमानांश्च खण्डशः ॥ २२ ॥

तपस्विन्यस्ततो धर्मं यावनं ग्राहिता हठात् ।
मुक्तकण्ठं रुदन्त्यश्च पर्यणीयन्त घातुकैः ॥ २३ ॥

स्त्रीत्वलिंगावशेषोऽयं विलुप्ताकारसौष्ठवः ।
विपद्ग्रस्तो मृतप्रायः स्त्रीवर्गो ददृशे बत ॥ २४ ॥

वराकिन्यो निरैक्ष्यन्त नष्टचैतन्यदृष्टयः ।
प्रयस्य रक्षितुं पुंसः काश्चिदक्षतकलेवराः ॥ २५ ॥

योषितोऽपहृता गेहान्नवोढा इव मुस्लिमैः ।
परित्रातुं वृथा चक्रुः प्रयत्नानधिकारिणः ॥ २६ ॥

सुखिताऽत्र गृहेऽस्मीति नाश्वासयपि [illegible] ।
ध्वंस्यते स्वत्कुलं कृत्स्नमित्याभीत[illegible] ॥ २७ ॥

इस्लामधर्मनिष्ठाऽपि धेनुमांसाशनं [illegible] ।
प्राणपण्यमिव स्त्रीणां व्यधीयन [illegible] ॥ २८ ॥

इति सौ. क्षमायाः कृतिषु [illegible] [illegible]प्रयाणं नाम
[illegible]

## चतुस्त्रिंशोऽध्यायः

### वङ्गग्रामपर्यटनम् ।

ग्रासमात्रः स पूर्वोक्तं चौमुहान्यभिधं स्थलम् ।
ग्रामप्रतिनिधींस्तत्र स्वीचकार समागतान् ॥ १ ॥

कृत्वा स्थलीयसंस्थाभिः प्रस्तुतार्थविचारणाम् ।
खिन्नः शुश्राव तैरुक्तां नानाक्लेशपरम्पराम् ॥ २ ॥

रक्षितुं न क्षमा आर्तान् रक्षका चाऽपि सैनिकाः ।
स्वयमेव विधेयं तद् ग्रामीणैरात्मरक्षणम् ॥ ३ ॥

इति ग्रामजनं गान्धिरनुशिष्याब्रवीत्पुनः ।
नापनीता इतो यावत्सायुधा आंग्लसैनिकाः ॥ ४ ॥

तावत्क्षोभानलज्वालाः प्रशमं नैव यान्त्यमूः ।
प्रज्वलेयुः परं यावद्धस्मीभवति भारतम् ॥ ५ ॥

यदा सैनिकसाहाय्यापेक्षया लज्जिता जनाः ।
यदा चाहिंसनस्यामी सारं स्वानुभवाद्विदुः ॥ ६ ॥

तदा हि प्रशमं याति ज्वालाजालं भयङ्करम् ।
पूर्ववच्च पुनः सर्वं प्रकृतिस्थं भविष्यति ॥ ७ ॥

भिया ये हि प्रवर्तन्ते स्वात्मनस्ते न केवलम् ।
परं चिराश्रितस्यापि हानिं पक्षस्य कुर्वते ॥ ८ ॥

यदि स्वे नानुतप्यन्ते मौर्ख्यहिंसे विदर्भजैः ।
मुस्लिमा हि तदा नित्यं स्थास्यन्ति विमनायिताः ॥ ९ ॥

उपवासो मया योऽग्रे कर्तव्यत्वेन निश्चितः ।
स तावत्प्रार्थये युष्मान्माऽस्तु केनाप्यपोहितः ॥ १० ॥

अथासौ चौमुहानीतो महात्मा समुपाययौ ।
दत्तपाराभिधं ग्रामं विश्रान्तिमभिलाषुकः ॥ ११ ॥

तत्र श्रौढगिरा धीमान् चभाषे दीनवत्सलः ।
पुरस्ताद्ग्रामलोकानां प्रदोपप्रार्थनोत्तरम् ॥ १२ ॥

" नवखाल्या घोरवृत्तै रोषिताः सन्ति हिन्दवः ।
क्रियन्ते तु महायत्नाः समीकर्तुं परिस्थितिम् ॥ १३ ॥

शमनं दुष्करं प्रायः कलहस्य द्वयोरपि ।
तथेत्परः सहस्राणां सुतरां दुष्करं खलु ॥ १४ ॥

अलमत्यद्भुतं कर्तुं परेशः सर्वशक्तिमान् ।
मानवस्तु स्वकं मार्गं तमसीव परामृशेत् ॥ १५ ॥

प्रमादानपि स प्रायः कुर्यात्तदपि सुव्रतः ।
श्रद्धया चेत्प्रवर्तेत सर्वं साधु भवेत्तदा ॥ १६ ॥

अथ लक्ष्मीपुरग्रामे गृहभ्रष्टागतान्मुनिः ।
आर्तानाश्वासयन्सौम्यवचनैः समबोधयत् ॥ १७ ॥

निवसाम्यहमत्रैव यावदावश्यकी स्थितिः ।
हास्यामि नवखाल्यर्थे प्राणानपि न संशयः ॥ १८ ॥

श्रीमानाजादमौलानो मुस्लिमानां कृते स्वयम् ।
पुनः स्वस्वगृहान् गन्तुं सर्वान् हिन्दूनुदैरयत् ॥ १९ ॥

जाने तत्सुकरं वक्तुं न पुनः कर्तुमिच्छया ।
निवसेयुः क ते भ्रष्टा दग्धलुण्ठितमन्दिराः ॥ २० ॥

इयमिच्छा हि सर्वेषां यत्समाजावुभावपि ।
स्वस्वधर्मे विभिन्नेऽपि प्रशान्तौ सह जीवताम् ॥ २१ ॥

विध्वंसं सर्वतो घोरं प्रत्यक्षीकृतवानहम् ।
ग्रस्तालोकेन लोकानां मम दुद्राव मानसम् ॥ २२ ॥

भयं निष्कास्य भोः सौम्या निवर्तध्वं गृहान्निजान् ।
भगवन्नाम न त्याज्यं मुखं जीवितुमिच्छता ॥ २३ ॥

स्मरामि * जलियन्वालाकाण्डे पुंसः सुमांसलान् ।
कुक्षिणा सर्पयामास यथांग्लयुवकद्वयम् ॥ २४ ॥

वीथिकायाममी पण्डाः ससृपुर्यत्र कुक्षिणा ।
सा ततः प्रभृति प्रोक्ता कुक्षिसर्पणवीथिका ॥ २५ ॥

सन्त्यत्र नगररक्षा ग्रहीतुं चौरलुण्ठकान् ।
पैराक्रमणाद्देशं रक्षितुं चापि सैनिकाः ॥ २६ ॥

न युद्धात्सैनिका युष्मान् निवर्तयितुमीशते ।
न वा शिक्षयितुं शक्ताः भ्रातृवत्सहजीवनम् " ॥ २७ ॥

ययौ लक्ष्मीपुराद्गान्धिर्ग्रामं काजिखिलाभिधम् ।
भूयांसो मुस्लिमा यत्र समेयुः सायमीक्षितुम् ॥ २८ ॥

दृष्ट्वा मुस्लिमसंदोहं बहु प्रीतोऽभवन्मुनिः ।
तृषितास्तेऽपि च श्रोत्रैस्तस्य वागमृतं पपुः ॥ २९ ॥

यदि न भ्रातृवद्भूयो भवेयुर्हिन्दुमुस्लिमाः ।
नवखालीपुरे प्राणान् विहास्यामि न संशयः ॥ ३० ॥

इति मंदस्वरेणोक्तस्तदीयो दृढनिश्चयः ।
तत्र मुस्लिमवृन्देन तदेकाग्रतया श्रुतः ॥ ३१ ॥

ततः स रामगञ्जाख्यं ग्रामं गान्धिः समासदत् ।
न्यवेदयज्जनांश्चात्र निजागमनकारणम् ॥ ३२ ॥

तद्येदं मुस्लिमानां च हिन्दूनां चैक्यसाधनम् ।
न कस्मादपि भेतव्यमन्यत्र परमेश्वरात् ॥ ३३ ॥

इतीदं मनसा धार्यं सर्वदेत्युपदिश्य सः ।
जोयं काझिखिले ग्रामे निनाय दिवसान्मुनिः ॥ ३४ ॥

---

* अमृतसरसि जलियन्वाला नाम प्रसिद्धमुद्यानं वर्तते यत्राङ्ग्लैः गुलिकापातेनानागसो बहवो भारतीया हताः ।

विहारार्थं गतः प्रातर्दीर्घकालोत्तरं पुनः ।
नारिकेलद्रुमारामैराघृतेनाध्वनाऽभितः ॥ ३५ ॥

भस्मीभूतं ततः सौधं ददर्श श्रेष्ठिनः क्वचित् ।
परश्शतानि चान्यानि नाशितानि गृहाणि सः ॥ ३६ ॥

संमिमेल जनस्तोमः पाठशालामहाङ्गणे ।
श्रद्धया केचिदन्ये च जग्मुर्वाग्मित्वकौतुकात् ॥ ३७ ॥

( महात्मोवाच । )

" महत्यासीन्ममाशंसा सौम्याः पूर्वमिहागमात् ।
निर्व्याजमनसा कर्तुं मुस्लिमैः सह संकथाः ॥ ३८ ॥

दुष्कर्मणोऽनुतप्येरन्वारयेयुश्च निर्गमात् ।
हिन्दून्स्वस्वगृहेभ्यश्चेत्याशया चिन्तितं मया ॥ ३९ ॥

हार्दिकः सोऽनुतापश्चेदभिज्ञाय तदार्जवम् ।
हिन्दवः पुनरेतेषु विश्वसन्तीत्युदीक्षितम् ॥ ४० ॥

परं तु दूयते चेतः ग्राम्यवङ्गेषु यन्मनौ ।
उभौ च पक्षविद्वेषौ तिष्ठतः कारणैरलम् ॥ ४१ ॥

षभूवुर्दर्पका ह्यादौ ग्राम्यवर्गेषु मुस्लिमाः ।
ध्वंसयन्तः सुरागारसौधविद्यालयादिकम् ॥ ४२ ॥

अपजहुर्बलान्नारीर्यवनीचक्रिरे च ताः ।
इत्थंतैर्द्विगुणीचक्रे दुराचारैः स्वपातकम् ॥ ४३ ॥

अतः प्राणभयं तेभ्यः कलयन्ति हि हिन्दवः ।
भयोत्पादनमन्येषु मनुष्यस्य ग्रपाकरम् ॥ ४४ ॥

पशवोऽपि वितन्वन्ति मैत्रीं मिश्रीभवन्तु हि ।
किं ब्रूमहे मनुष्याणां चरितं देवरूपिणाम् ॥ ४५ ॥

उपकुर्यान्नरस्तस्मादपकारिणि सर्वथा ।
अमोघीकर्तुमिच्छेच्चेत्पृथिव्यामात्मजीवितम् ।। ४६ ।।

इस्लामधर्मशास्त्रस्य सर्वथा नैव सम्मतः ।
प्रमादासु दुराचारो जातिभ्रंशस्तथा बलात् ।। ४७ ।।

किं कलमापठनेन स्याज्जनश्चेदन्तरात्मनि ।
इस्लामोदारधर्मस्य वर्ततेऽति पराङ्मुखः ।। ४८ ।।

प्रष्टव्या मुस्लिमैस्तस्मादवश्यं निजनायकाः ।
हिन्दुभिः सह सौहार्दं वैरं वा श्रीयतामिति ।। ४९ ।।

द्वैधं चेदमिलष्येयुरादिशेयुस्तदा द्रुतम् ।
हिन्दूनां प्राच्यवंगेभ्यः साकल्येन विसर्जनम् " ।। ५० ।।

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये वङ्ग-ग्रामपर्यटनं नाम चतुस्त्रिंशोऽध्यायः ।



# पञ्चत्रिंशोऽध्यायः

## गान्धिप्रयासः ।

अथासाद्य क्रमाद्ग्रामं श्रीरामपुरनामकम् ।
प्राकाश्यमनयद्भावं प्रगल्भार्थमसौ यथा ॥ १ ॥

अस्युक्त्यसत्ययोर्मध्ये मम दोलायते मनः ।
उपलब्धुमतः सत्यमक्षमोऽस्म्यत्र सर्वथा ॥ २ ॥

समीक्ष्यते मया ग्रामे ग्रामे पर्यटताऽधुना ।
मिथो भीकृदविश्वासः पूर्वमैत्री गतैव सा ॥ ३ ॥

अहिंसा या मया पथ्या वत्सरैः परिसेविता ।
साऽद्य मे प्रतिभात्येषा मोघीभूतप्रयोजना ॥ ४ ॥

अहिंसाया अमोघत्वमात्मानं वा परीक्षितुम् ।
इतो ग्रामं प्रयास्यामि सीतारामपुराभिधम् ॥ ५ ॥

चिरं सिषेविरे ये मां त्यक्त्वा यान्त्वनुयायिनः ।
विहाय वंगभापाज्ञ-लघुसङ्केतलेखकौ ॥ ६ ॥

आगता ये मया सार्धं गच्छन्तु सहकारिणः ।
नवखालीप्रदेशस्य ग्रामे ग्रामे पृथक् पृथक् ॥ ७ ॥

प्रत्येकं स्वस्वघोषेषु विघटय्य परस्परम् ।
साधयन्तु यथाशक्यं पक्षयोस्सुसमाहितिम् ॥ ८ ॥

प्रेष्यतां मुस्लिमो धीरः सरलो मन्त्रिभिर्वृतम् ।
प्रतिग्रामं समायातुं हिन्दुना तुल्यवृत्तिना ॥ ९ ॥

शरणाभ्यर्थिहिन्दूनां गेहं प्रत्यागमिष्यताम् ।
रक्षणे लग्नकौ तौ हि स्यातां प्राणव्ययादपि ॥ १० ॥

न जाने पक्षयोर्द्वैधं कदा वा शान्तिमेष्यति ।
तावच्च ग्राम्यवह्निभ्यः करिष्ये न बहिः पदम् ॥ ११ ॥

यावद्भवति विश्वासो हिन्दुमुस्लिमयोर्मिथः ।
यावद् ग्रामजनो भूयः श्रयते रूढजीवनम् ॥ १२ ॥

तावत्प्रयतनं कार्यं न खल्वैक्यं विना भवेत् ।
पाकिस्थानं न वा हिन्दुस्थानं वा भारतावनौ ॥ १३ ॥

रामगञ्जपुरं गान्धेर्गच्छतो जलमार्गतः ।
सकन्दपुष्पगुच्छेषु विलग्ना तस्य नौः स्थिता ॥ १४ ॥

गच्छता तेन मार्गेण मुस्लिमद्वितयेन सा ।
रोधनान्मोचिता नौश्च प्रवृत्ता चलितुं पुरः ॥ १५ ॥

प्रत्याजगाम तद्रात्रौ सीतारामपुरीं मुनिः ।
ईश्वरप्रार्थनां सायं नौकायां वै चकार सः ॥ १६ ॥

अथैकदा किल श्रीमानह्नः कतिपयोत्तरम् ।
प्रदोषप्रार्थनां चक्रे ग्राममुस्लिममन्दिरे ॥ १७ ॥

अर्धसाहस्रकं तत्र मुस्लिमानां समाययौ ।
तेन कोरानपठनं चैकाग्रमनसा श्रुतम् ॥ १८ ॥

पठ्यते स्म हि स ग्रन्थो बुधवर्येण मोल्विना ।
प्रार्थनाङ्गात्मकः सोऽयं गान्धिनाऽऽसीत्प्रकल्पितः ॥ १९ ॥

अन्येन केनचिच्चापि सुस्वरेणाभ्यगीयत ।
हिन्दुमुस्लिमयोरैक्यं बोधयन्ती सुगीतिका ॥ २० ॥

तत्र संमिलितानां च पुरो ग्रामनिवासिनाम् ।
सूक्तिमुक्ताः समुत्पेतुर्मुखाम्भोधेर्महात्मनः ॥ २१ ॥

तथा हि श्रूयतां सौम्या वचः सत्यं ब्रवीमि वः ।
कथयिष्याम्यहं युष्मानागमस्य प्रयोजनम् ॥ २२ ॥

नोत्पादयितुमस्म्यत्र विरोधं पक्षयोर्द्वयोः ।
परं तु सुदृढीकर्तुं प्रेमबन्धं तयोः पुनः ॥ २३ ॥

तयोर्मध्ये न भेदोऽयं विधिना परिकल्पितः ।
कल्पयेत्तु नरः कस्मात्सर्वेशस्तुल्यजीवनम् ॥ २४ ॥

यावदावश्यकी तावत्प्राच्यवर्गेषु मे स्थितिः ।
भविष्यत्यथवा यावज्जीवमेवापि सा भवेत् ॥ २५ ॥

यथाशक्ति यतिष्येऽहमेकीकर्तुमुभावपि ।
तौ हि वर्षशतान्यास्तां भ्रातृवत्सहजीविनौ ॥ २६ ॥

कुरुते केवलं यत्नान् सप्रयासं नरो भुवि ।
कार्यसिद्धिः परं तस्य परमात्मनिबन्धिनी ॥ २७ ॥

एकदा व्रीहिकेदारे पादचारेण गच्छतः ।
मुनेर्दृक्पथमाजग्मू रुदत्यो दुःखिताङ्गनाः ॥ २८ ॥

कथाः सर्वस्वनाशस्य निवेद्यामूर्महात्मने ।
ब्रूहि नः किन्तु कर्तव्यमित्यपृच्छन् सगद्गदम् ॥ २९ ॥

हस्तेन निर्दिशन्नूर्ध्वं नभः पर्यश्रुलोचनः ।
सोऽब्रवीत्प्रार्थ्यतामीशो विभीतास्मान्न चान्यतः ॥ ३० ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये गान्धिप्रयासो नाम
पञ्चत्रिंशोऽध्यायः ।



# षट्त्रिंशोऽध्यायः

## ग्रामपर्यटनम् ।

* शैलाम्बुधिग्रहेन्द्वङ्को वत्सरो भारतावनौ ।
ऐतिहासिकवार्ताभिबह्वीभिर्यो हि विश्रुतः ॥ १ ॥

अटितुं प्रत्यहं ग्रामाद्ग्रामं गान्धिः सुनिश्चितः ।
श्रीरामग्रामतः प्रातर्ययौ चांदपुरं प्रति ॥ २ ॥

अथ प्रस्थास्यमानोऽयं ग्रामात्प्रातस्तरां व्यधात् ।
भगवत्प्रार्थनां तत्र क्रैस्ताब्दस्याग्रिमेऽहनि ॥ ३ ॥

क्रिस्तजन्मोत्सवे मन्त्राः पठिताः क्रैस्तशास्त्रतः ।
केचिन्मनीषिणा प्रोक्षैर्निर्मलाख्येन केनचित् ॥ ४ ॥

प्रार्थनोर्ध्वं कृतज्ञोऽसौ परमोदारचेतसा ।
जगाद मिलितान् लोकान्महात्मा सौम्यया गिरा ॥ ५ ॥

" अत्र मेऽवस्थितेः कालः सौम्या अवसितोऽभवत् ।
अटितुं ग्रामतो ग्रामं प्रस्थास्ये न चिरादहम् ॥ ६ ॥

गृहे यत्र कृतावासो गृहिणा तत्र सत्कृतः ।
कृतज्ञोऽस्मि तदातिथ्यात्सौजन्याच्च निवासिनाम् ॥ ७ ॥

जनैरस्मि प्रयाणं मे विलम्बयितुमर्थितः ।
परं नोपेक्षणीयं मे विधेयं प्राग्विनिश्चितम् ॥ ८ ॥

प्रतिष्ठासुं पुरा दाण्डीं लक्षशो मां जनोऽन्वगात् ।
इदानीमद्वितीयस्तु ग्रामाद्ग्राममटाम्यहम् " ॥ ९ ॥

अथ वक्ष्यामि कार्याणामस्य दैनन्दिनक्रमम् ।
मासस्यारम्भदिवसाद् ग्रामान् पर्यटतो मुनेः ॥ १० ॥

---

* १९४७ खिस्ताब्दः ।

स हि प्रातर्विधीन् कृत्वा प्रस्थितः प्रार्थनोत्तरम् ।
घटिकापञ्चकेनैव द्वितीयं ग्राममासदत् ॥ ११ ॥

ग्रामध्याह्नमभूत्तस्य गात्रसंवाहनावधिः ।
अथाल्पाहारमासेव्य होरार्धं व्यश्रमत्सुखम् ॥ १२ ॥

ततश्च ग्रामिकैस्तत्तद् ग्रामेषु परिवेष्टितः ।
यज्ञिये तन्तुनिर्माणे कञ्चित्कालं निनाय सः ॥ १३ ॥

स्वल्पाहारमथादाय नारङ्गादिरसात्मकम् ।
ईश्वरप्रार्थनां चक्रे ग्रामीणैः समुपस्थितैः ॥ १४ ॥

संध्याकालं ततोऽनैषीद् ग्रामीणानां गृहे गृहे ।
पुरुषार्भकयोषाभिः कथालापप्रसङ्गतः ॥ १५ ॥

इत्थं होराद्वयं नीत्वा ग्रामलोकैर्मुनिर्मुदा ।
कुटीं प्रत्याययौ रात्रौ सुप्रीतस्तत्समागमात् ॥ १६ ॥

तृणपर्णादिसञ्छन्ना तदर्थं जङ्गमा कुटी ।
निर्मिता पूर्वमेवासीद्वहनीया विना श्रमम् ॥ १७ ॥

सजङ्गमकुटीरेण नापेक्ष्यत महात्मना ।
आश्रयो निशि गेहेषु विश्रान्त्यै ग्रामवासिनाम् ॥ १८ ॥

ग्रामाध्यक्षः प्रतिग्रामे समाजस्थितिशंसिनीम् ।
सज्जीकृत्य ददौ तस्मै पुरस्तादेव पत्रिकाम् ॥ १९ ॥

अथ चांदपुरग्रामे नीत्वा दिनचतुष्टयम् ।
अटनं ग्रामतो ग्राममारेभे निश्चितात्मना ॥ २० ॥

ग्राममेकं दिवा गत्वा निशि विश्रम्य तत्र च ।
ग्रामान्तरं परेद्युश्च व्रजन्नेव ददर्श सः ॥ २१ ॥

एकमासान्तरे ग्रामानष्टाविंशतिमित्वरः ।
अथ प्राकाश्यमनयत्स्वमेकं च तयया ॥ २२ ॥

" न कदाप्यन्धकारोऽयमनुभूतो मया क्वचित् ।
प्रतिभान्ति तमस्विन्यः सुदीर्घाश्च तथाप्यहम् ॥ २३ ॥

न भग्नाशो न चोद्भ्रान्तः संवृत्तोऽस्मीति तुष्यते ।
यद्भावि तद्भवत्वेव सज्जितः स्थितवानहम् ॥ २४ ॥

क्रियतां म्रियतां वेति वाक्यस्यार्थोऽयमुच्यते ।
बद्धसख्यौ प्रशान्तौ च जीवेतां हिन्दुमुस्लिमौ ॥ २५ ॥

तदेतत्साधनीयं मे साधने मृतिरस्तु वा ।
जाने परं तु सर्वस्मादीश्वरेच्छा बलीयसी ॥ २६ ॥

नोद्वेगस्यावकाशः स्याज्जीविते हि विवेकिनः ।
स्वार्थचिन्ताविहीनस्य परार्थाय प्रयस्यतः ॥ २७ ॥

अतीव जटिलं कार्यमिदमत्यन्तदुष्करम् ।
तथाप्यस्मि क्षमो गातुं सत्यपूर्णामिमां गिरम् ॥ २८ ॥

अन्धकारमयी रात्रिर्गृहाद्दूरं स्थितोऽस्म्यहम् ।
त्वमेव शरणं नाथ मार्गदर्शी सदैव मे ॥ २९ ॥

स्वयमेव पवित्रेऽस्मिन् कार्ये मम ममानुगाः ।
यः पराजयते कार्यात्स निर्यातु स्वकामतः ॥ ३० ॥

एकाकी स्वेच्छया ग्रामं वृत्तवान् हि पृथक् पृथक् ।
स्थितोऽस्म्यहं च दुःखार्ते ग्रामेऽस्मिन् दूरवर्तिनि ॥ ३१ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये ग्रामपर्यटनं नाम
षट्त्रिंशोऽध्यायः ।



# सप्तत्रिंशोऽध्यायः

## राधाकुमुन्दमूर्तिस्थापनम् ।

अथ चांदपुरात्सायं संप्राप्तं माटियापुरम् ।
श्रेष्ठी कश्चिन्महात्मानं जगाद प्रार्थनोत्तरम् ॥ १ ॥

ग्रामोऽयं पावितः श्रीमन्भवत्पादाब्जरेणुभिः ।
मन्येऽहं धन्यमात्मानं दर्शनेन पवित्रितम् ॥ २ ॥

स्मारकं तव हस्ताभ्यां स्थापनायात्र प्रार्थये ।
प्रतिष्ठापयितुं मूर्तियुग्मं राधामुकुन्दयोः ॥ ३ ॥

अनुमोद्य मुनिस्तस्य श्रेष्ठिनोऽभ्यर्थनां शुभाम् ।
स्वकुटीरसमीपस्थं प्राविशत्सुरमन्दिरम् ॥ ४ ॥

रम्याः स्रजः सुपुष्पाणामानिन्युः काश्चिदङ्गनाः ।
अन्याश्चन्दनलेपादीनितराश्च कुशाङ्कुरान् ॥ ५ ॥

ध्मायमानेषु शङ्खेषु श्रेष्ठिनः कुलदेवयोः ।
महात्मा प्रतिमायुग्मं स्थापयामास मन्दिरे ॥ ६ ॥

निर्गच्छन्तं महात्मानं न चिराद्देवतागृहात् ।
मुस्लिमप्रमुखाः केचिन्नमस्कृत्याब्रुवन् यथा ॥ ७ ॥

पुनः स्थापितयोर्मूर्त्योः श्रेष्ठिनः कुलदेवयोः ।
रक्षणाय भविष्यामः सर्वदा लग्नका वयम् ॥ ८ ॥

प्रत्युवाच महात्मा तान् इष्टदेव हि वाञ्छितम् ।
हिन्दुभिः स्वल्पशङ्क्याकर्नान्यत्किञ्चिन्मनागपि ॥ ९ ॥

ततो निवर्तमानं तं विहारान्ते कुटीं मुनिम् ।
तत्रत्या मुस्लिमाः केचित्समुपेत्याब्रुवन् यथा ॥ १० ॥

नवखालीपुरे श्रीमन्यत्कार्यं भवता कृतम् ।
तस्मात्सर्वे कृतज्ञाः स्मः कोऽन्यः कुर्यादमुत्तमम् ॥ ११ ॥

यद्यत्पुरा हि संवृत्तं न तद्भूयो भविष्यति ।
ग्रामवास्तव्यहिन्दूनां रक्षाप्रतिभुवो वयम् ॥ १२ ॥

( महात्मोवाच । )

तुष्टोऽस्मि भो भवद्वाक्यं हृदयादागतं यदि ।
न पुनर्वदनादेव तदाऽस्य महिमाऽद्भुतः ॥ १३ ॥

यतस्तस्य फलं सद्यो न परं भारतावनौ ।
अपि त्वशेषराष्ट्रेषु पृथिव्यां प्रसरिष्यति ॥ १४ ॥

भाटियापुरतो गान्धिर्नारायणपुरं ययौ ।
मुस्लिमा यत्र भूयांसः समीयुः प्रार्थनाङ्गणम् ॥ १५ ॥

ततो जगाम स ग्रामं रामदेवपुराभिधम् ।
भगवत्प्रार्थनोर्ध्वं च प्राह संमिलितान् यथा ॥ १६ ॥

सन्ति जिज्ञासवः केचिन्मन्मतं मुस्लिमा इह ।
द्वित्रानेषामहं प्रश्नान्प्रतिवक्ष्यामि साम्प्रतम् ॥ १७ ॥

( प्रथमः प्रश्नः । )

ऐक्यं यवनहिन्दूनां त्वया चेदभिलष्यते ।
सिक्खसभ्यास्तदा कस्मात्कामरूपजनास्तथा ॥ १८ ॥

राज्यतन्त्रसभास्थानाद्बहिः स्थातुं प्रबोधिताः ।
भवदीयोपदेशोऽयं विरुद्धः प्रतिभाति नः ॥ १९ ॥

( द्वितीयः प्रश्नः । )

अथ मुस्लिमसंघीयाः प्रवेष्टुं किमु शक्नुयुः ।
राज्यशासननिर्माणसभां सम्प्रति कल्पिताम् ॥ २० ॥

( महात्मोवाच । )

' आयौवनादविच्छिन्नमन्दपष्टेः किल स्थितम् ।
ऐक्यं यवनहिन्दूनामुद्देश्यं जीवितस्य मे ॥ २१ ॥

न पश्यामि मदुद्देश्यविरोधं तत्प्रबोधने ।
यथेष्टं कर्तुमुक्तास्ते नोपरोधो मया कृतः ' ॥ २२ ॥

पर्कोटीनामकाद् ग्रामात्तप्तपादो ययौ मुनिः ।
शालिक्षेत्रेषु रम्येषु मञ्जरीभिः पुरस्कृतः ॥ २३ ॥

रामदेवपुरग्रामे सोऽध्वनि व्यरमत्क्वचित् ।
तत्रास्य मुस्लिमः कश्चित्केनचित्परिचायितः ॥ २४ ॥

सोऽयं महमदाख्यातो येन मार्गः परिष्कृतः ।
यथान्यग्रामसञ्चारः सुगमः स्यान्महात्मनः ॥ २५ ॥

शुभाशीर्वचनैरेतमभिनन्द्य स्मिताननः ।
अटाखोराभिधं गान्धिर्ययौ ग्रामं चतुर्दशम् ॥ २६ ॥

आदरेण महात्मानमवादीत्कोऽपि मुस्लिमः ।
अस्माभिः सफलीकार्यः सर्वथा भवदुद्यमः ॥ २७ ॥

अथोचुर्मुस्लिमाः सर्वे विस्मरामः पुराकृतम् ।
प्रतिजानीमहे ग्रामे सहास्माभिर्निवासिनाम् ॥ २८ ॥

अल्पसंख्याकहिन्दूनां यत्नतः परिरक्षणम् ।
तथा तेषां गृहारामक्षेत्राणामप्यनाशनम् ॥ २९ ॥

विलुण्ठितधनं क्षेत्रे क्षिप्तं वा गोपितं क्वचित् ।
प्रत्याहृत्य पुनः सर्वं हिन्दुभ्यस्ते समार्पयन् ॥ ३० ॥

पर्कोटीपत्तने गान्धिशुश्रूषासंघसेवकान् ।
उदारवचनैः श्रीमान्बोधयामास तद्यथा ॥ ३१ ॥

खड्गस्य खड्गतो दण्डः सुकरः किन्तु निष्फलः ।
कुर्योद्धिंसाभयत्यागः स्वां वः सहस्रशोऽधिकाम् ॥ ३२ ॥

इत्याकर्ण्याब्रवीदेकः स्वयंसेवकमण्डलात् ।
वयं न खलु भीताः स्मो यदा सर्वे सह स्थिताः ॥ ३३ ॥

( महात्मोवाच । )

"भीता एकाकिनो यूयमिति स्पष्टं भवद्भिरा ।
न स्वयंसेवकः क्वापि बिभीयादेककोऽपि सन् ॥ ३४ ॥

यद्वा भवत्वसौ नैव कदापि नमयेच्छिरः ।
भयापमानयोर्नैव तथा परवशो भवेत् ॥ ३५ ॥

ग्रामलोकोपयुक्तेषु कर्मस्वेव व्यवस्यत ।
तथा संगच्छत भ्रातृभावेन सह मुस्लिमैः ॥ ३६ ॥

न हि दण्डप्रहारेण विजेतुं शक्यते परः ।
परं तु प्रेमभावेन सुजेयः स भविष्यति ॥ ३७ ॥

इत्युक्त्वाऽथ महात्माऽसौ स्वयंसेवकमण्डलम् ।
प्राह हिन्दुस्त्रियः काश्चित्स्वदर्शनसमुत्सुकाः ॥ ३८ ॥

नवखालीपुरे यद्यद्वृत्तं तद्दैवशापतः ।
तद्ग्रस्ता न परं वङ्गा अपि त्वखिलभारतम् ॥ ३९ ॥

अन्योन्यव्यवहारेषु युष्माकमपि जीवने ।
कालानुगुण्यतः किञ्चित्परिवृत्तिरपेक्ष्यते ॥ ४० ॥

अन्याभिर्हिन्दुयोषिद्भिराचरेत्समभावतः ।
मुस्लिमप्रमदाभिश्च भगिनीवृत्तिमाश्रयेत् ॥ ४१ ॥

यूयं चेन्मुस्लिमस्त्रीषु स्वस्रवत्पूर्वतः स्थिताः ।
नवखालीपुरानर्थास्तदा स्युर्वारिता भृशम् ॥ ४२ ॥

न कार्यं सावकाशत्वे युष्माभिः कालयापनम् ।
नियतां सूत्रनिर्माणं सफलो भवति श्रमः " ॥ ४३ ॥

मुरेमाख्यं ततो ग्रामं नारायणपुराद्ययौ ।
तस्य पर्यटतश्चैष ग्रामो नवदशोऽभवत् ॥ ४४ ॥

सदण्डः पादचारेण छिन्नक्षेत्रेषु सञ्चरन् ।
सम्प्राप्याध्यवसद्देहं मुस्लिमस्य पुरोधसः ॥ ४५ ॥

सोऽयं मौल्वीहवीवुल्ला वटारीवंशसम्भवः ।
मेने धन्यं किलात्मानं दर्शनेन महात्मनः ॥ ४६ ॥

जनाः परस्सहस्राश्च दूरग्रामनिवासिनः ।
सन्निपेतुर्महोत्कण्ठाः प्रदोषप्रार्थनासभाम् ॥ ४७ ॥

सहस्रद्वयमेतेषामागात् त्रिपुरनीवृतः ।
वृन्दं पुमर्भकस्त्रीणां महत् तद्दर्शनोत्सुकम् ॥ ४८ ॥

नवखालीप्रदेशस्य न्यायाधीशः समाययौ ।
माकनेरीतिसमाख्यातः पद्भ्यां क्रोशचतुष्टयम् ॥ ४९ ॥

ग्रामं पञ्चगडं गान्धिर्नग्नपादस्ततो ययौ ।
शालिक्षेत्रे तथा मार्गे क्रममाणः सकण्टके ॥ ५० ॥

ग्रामीणा मुस्लिमाः श्रुत्वा तत्कष्टं ह्रेपिता भृशम् ।
वर्त्मनः परिशोधाय बभूवुर्द्रुतमुद्यताः ॥ ५१ ॥

सायं निवर्तमानोऽसौ कुटीं पञ्चगडान्मुनिः ।
महान्तं विस्मयं प्राप वर्त्मनः परिवर्तनात् ॥ ५२ ॥

वनिताः पुरुषा बाला मार्गस्योभयपार्श्वयोः ।
महात्मानं पुरस्कर्तुं क्रोशत्रयमवस्थिताः ॥ ५३ ॥

प्रमार्ष्टुं स्वाम्बरान्तेन तत्पादाम्बुजरेणुकाः ।
स्पर्धमाना मिथो गान्धिं प्रमदाः समुपाययुः ॥ ५४ ॥

शिशवो वन्यपुष्पस्रक्पाणयस्तं स्मिताननम् ।
वर्धमानपरिस्पर्धाः कुतुकात्पर्यवेष्टयन् ॥ ५५ ॥

श्रीकृष्णायेव मूर्ताय नालिकेराण्यदुः पुरे ।
स तु नान्यद्भवत्प्रेम्णो वाञ्छामीत्यब्रवीदमून् ॥ ५६ ॥

इति श्री. क्षमायाः कृतिषु स्वराज्यविजये राधामुकुन्दमूर्तिस्थापनं नाम
समत्रिंशोऽध्यायः ।

# अष्टात्रिंशोऽध्यायः

## ग्रामाटनम् ।

नवग्रामाभिधं ग्राममाससाद मुनिर्यदा ।
तमागमत्पुरस्कर्तुं संदोहः क्षेत्रजीविनाम् ॥ १ ॥

त्रिभागाख्यविवादस्तैः कृषिकैः संप्रवर्तितः ।
तृतीयांशद्वयं स्वैः स्वैः प्राप्यं क्षेत्रफलादिति ॥ २ ॥

श्रावितप्रस्तुतार्थस्तन्मतं जिज्ञासुभिर्जनैः ।
अभिनन्द्य महात्मा तान् समुदीरितवान् यथा ॥ ३ ॥

क्षेत्रं क्षेत्रपतेर्न स्वं परं तु जगतीपतेः ।
तस्माद्यैः कृष्यते क्षेत्रं स्वामिनोऽस्य भवन्ति ते ॥ ४ ॥

युष्मान्प्रबोधयाम्यत्र न हिंसा न बलात्कृतिः ।
प्रयोज्या खलु युष्माभिस्तद्विवादप्रशान्तये ॥ ५ ॥

इत्युक्ते पादयोः कश्चिन्निपत्य प्रवया मुनेः ।
सबाष्पः कथयामास तस्मै मर्मविधाः कथाः ॥ ६ ॥

श्रीमन्मम हता भार्या हता कन्या हतः सुतः ।
हताश्च बान्धवः स्वं मे लुण्ठितं हा करोमि किम् ॥ ७ ॥

निशम्यैतद्द्रवीभूतहृदयः स्वोत्तरीयतः ।
परिमृज्य तदश्रूणि सान्त्वयामास तं यथा ॥ ८ ॥

अलं दुःखेन मद्भ्रातर्विनष्टेऽप्यखिले कुले ।
जीवचक्रं भ्रमत्येवं मा धैर्यात्प्रच्युतो भव ॥ ९ ॥

इति तत्पाणिमादाय स्कन्धे तमुपगूह्य च ।
प्रार्थितो मन्दिरे तस्य निनाय निखिलं दिनम् ॥ १० ॥

स्नातमुक्तं ततो गान्धिमप्राक्षीत्काचिदङ्गना ।
किं जनः स्वमतं त्यक्त्वा परधर्मं समाश्रयेत् ॥ ११ ॥

( महात्मोवाच । )

स्वधर्मस्य कृते प्राणांस्त्यक्तुं नेच्छति यः पुमान् ।
मानुषो न स वक्तव्यः पशुरेव नराकृतिः ॥ १२ ॥

ग्रामेऽस्मिन्मुस्लिमः कश्चिन्महात्मानमयाचत ।
परिकल्पितसम्भारमलङ्कर्तुं निजालयम् ॥ १३ ॥

पुरस्कर्तुं च तं गेहाद्वहिर्निर्मितमण्डपे ।
समेतो जनसंदोहस्तस्य दर्शनकाङ्क्षया ॥ १४ ॥

नारङ्गपूर्णमञ्जूषां स्वीकृत्य व्यभजन्मुनिः ।
फलानि बालकेभ्यो ये परितस्तमवस्थिताः ॥ १५ ॥

गृहीत्वा च ततः शेषमेकं हस्तेन पृष्टवान् ।
गृह्विणं किमिदं देयं वैदर्भाय मया न वा ॥ १६ ॥

उक्त्वैवं सविनोदं श्रीतय्यवंशाभिधं मुनिः ।
निर्दिदेश स्वयाङ्गुल्या पृष्ठभागस्थितं जनम् ॥ १७ ॥

अयं युष्मद्रिपुः किन्तु मया धर्मप्रसारिणा ।
सर्वथाऽरातिभिः सार्धं मित्रत्वं साधयिष्यते ॥ १८ ॥

इत्यूर्ध्वफलहस्तोऽसौ जहास प्रोच्चकैर्मुनिः ।
गृह्विणे चान्यलोकाय विनोदमुपपादयन् ॥ १९ ॥

स्तधारीयाभिधं ग्रामं सम्प्राप्तेऽथ महात्मनि ।
मासपर्यटनार्धस्य समाप्तिरभवत्तदा ॥ २० ॥

अटनस्य द्वितीयांशं ग्रामे साधुर्विलाभिधे ।
प्रारेभे सह युग्मेन पुरोक्तेनानुयायिनाम् ॥ २१ ॥

प्रसादपुरमासाद्य प्रदोषप्रार्थनोत्तरम् ।
अब्रवीद्वान्धिरुद्दिश्य विषयं शरणार्थिनाम् ॥ २२ ॥

" अन्नदानं समुद्दिश्य लोकाय शरणार्थिने ।
स्थलीयप्राड्विवाको द्यः पृष्टवान् मन्मनोगतम् ॥ २३ ॥

उत्सारः कन्दपुष्पाणां समीकरणमध्वनाम् ।
परिष्कृतिश्च केदारमुखं गृहविनिर्मितिः ॥ २४ ॥
इत्यादियोजनास्तेन ग्रामीणानां सुखासये ।
गृहभ्रष्टागतैः कार्या इति प्रागेव निश्चितम् ॥ २५ ॥
उद्यमानां किमप्येकं कुर्याच्चेच्छरणागतः ।
समर्हेत् स तदा पूर्णमन्नदानस्य पात्रताम् ॥ २६ ॥
घटनेयं भवेज्जाने सर्वेषामुपकारिणी ।
दत्तमासावधिश्चासौ वृणोतु स्वेच्छयोद्यमम् ॥ २७ ॥
मासान्ते न वृणीयाच्चेदनुकूलं समुद्यमम् ।
अन्नमस्मै तदा नैव प्रदातव्यं भविष्यति ॥ २८ ॥
साञ्जलिः प्रार्थये तस्माच्छरणार्थिजनानहम् ।
कुरुध्वं सर्वथोद्योगं सह राष्ट्राधिकारिभिः ॥ २९ ॥
अतोऽन्नग्रहणापेक्षा कायिकश्रममन्तरा ।
न योग्या मानिने पौरजनायेति निबोधत ॥ ३० ॥
सर्वेऽपि यदि जीवेयुः स्वश्रमैः शरणार्थिनः ।
तदेयं मेदिनी सर्वा स्वर्गतुल्या भविष्यति ॥ ३१ ॥
देहश्रमेण सर्वोऽपि निजान्नं चेदुपार्जयेत् ।
तदा वैद्यादयः स्वार्थं हित्वा स्युरुपकारिणः ॥ ३२ ॥
स्वार्थत्यागेन ते वृत्तिं वितन्वन्ति यथा यथा ।
भूयसी धनसम्पत्तिर्भवत्येषां तथा तथा " ॥ ३३ ॥
प्रसादपुरतो गान्धिर्ययौ हेमच्छडीपुरम् ।
विजयं नगरं पश्चात्कपिल्तलमनन्तरम् ॥ ३४ ॥
रोगिणां शिबिरं तत्र समालोक्य कपिल्तले ।
पादचारी ययौ प्राच्यकेरोवावनिमण्डलम् ॥ ३५ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये ग्रामाटनं नाम अष्टात्रिंशोऽध्यायः ।

# नवत्रिंशोऽध्यायः

## स्वराज्योद्घोषणा ।

अत्रान्तरे स्वाधिकारान्निवृत्तो वेवलः प्रभुः ।
मौण्टबेटन्निति ख्यातः समारूढश्च तत्पदम् ॥ १ ॥

स चाशास्ते स्म यद्देशादाङ्ग्लनिर्गमवासरे ।
ख्यापिते सत्युभौ पक्षौ विवादं निस्तरिष्यतः ॥ २ ॥

इत्यसौ महतीमास्थां कलयन्नीतिकोविदः ।
रूपयौवनशालिन्या भार्यया प्राप देहलीम् ॥ ३ ॥

अमात्य आटलिः श्रीमान्नभोवाण्योद्घोषयत् ।
यद्दिने निश्चितेऽस्माभिराधिपत्यं प्रदीयते ॥ ४ ॥

साम्नैवाधिकृतिः सर्वा प्रजासु प्रतिपाद्यते ।
आङ्ग्लानां निर्गमायापि ख्याप्यते निश्चितं दिनम् ॥ ५ ॥

इत्थमुद्घोषणाज्जातः प्रजासु प्रत्ययो महान् ।
यदाङ्ग्लेषु निवृत्तेषु पक्षावेतौ प्रशाम्यतः ॥ ६ ॥

अवश्यं च तयोरैक्यं भविष्यत्यात्मसम्मतम् ।
अन्यथा हि निमग्नः स्याद्देशो विप्लवसागरे ॥ ७ ॥

इति प्रत्यायिता लोका मेनिरे भाविनीं दशाम् ।
अपरे संशयापन्ना विकल्पांश्चक्रिरे बहून् ॥ ८ ॥

[illegible] घोषणा सेति केचन ।
अन्धगर्तनिपातोऽयमित्यन्ये भयशङ्किनः ॥ ९ ॥

प्रगल्भनीतिकौशल्यमिदमित्यपरे जनाः ।
प्रत्याशां व्यदधुः केचिदन्ये नैराश्यमाश्रयन् ॥ १० ॥

अथामृतसरःपुर्यां विप्लवोऽभन्मुदारुणः ।
दुराचारैर्यदा मार्गे धूमयानं न्यरुध्यत ॥ ११ ॥

अमी तक्षशिलापुर्यां लोहमार्गनिवेशने ।
अवस्कन्द्य हठात्पान्थान् कुठारैः प्राहरन् बहून् ॥ १२ ॥

अथांग्लवाहिनीयुग्मं प्राप्यामृतसरःपुरम् ।
अग्न्यस्त्रमोचनं चक्रे विना पूर्वनिवेदनम् ॥ १३ ॥

प्रहर्तुमुपयोज्यं यत्किञ्चिद्यस्य करे स्थितम् ।
स वध्यो गुलिकास्त्रेण निर्दोषोऽप्यभवत्क्षणात् ॥ १४ ॥

स्वर्णदेवालयख्याते पुण्येऽस्मिन्नगरे पुरा ।
न कदापि जनक्षोभः समभूद्रीदृगुल्वणः ॥ १५ ॥

न केवलं जना नेशुर्विप्लवेऽस्मिन् सहस्रशः ।
कृताश्च भस्मसाच्चित्रशालाहर्म्यापणव्रजाः ॥ १६ ॥

शतशो निर्धनानां च ययुरुद्धूलनं गृहाः ।
गता विध्वंसमेतस्माद् धनस्य दशकोटयः ॥ १७ ॥

अथ फाल्गुनमासादौ कृतग्रामपरिभ्रमः ।
श्रीगान्धिः पाटलीपुत्रमाससाद मुदे नृणाम् ॥ १८ ॥

पौराणामैधतोत्साहो मुस्लिमानां विशेषतः ।
पुनरागमनात्तत्र संसेव्यस्य महात्मनः ॥ १९ ॥

स्वयं स प्रार्थनां कृत्वा तत्र हिन्दून्विदर्भजान् ।
हृदयङ्गमया वाचा सर्वान्प्राबोधयद्यथा ॥ २० ॥

युष्माभिरुपयोक्तव्यो भविष्यन् होलिकोत्सवः ।
मुस्लिमैः सह सख्यस्य पुनरुज्जीवनाय वः ॥ २१ ॥

इति साधूपदेशोऽस्य बभूवाभीष्टसाधकः ।
दर्शितं किल सौहार्दं पक्षयोर्होलिकोत्सवे ॥ २२ ॥

अथासौ पाटलीपुत्रे महात्मा स्वयमव्रजत् ।
विप्लवे नाशितप्रायान्प्रदेशान्द्रष्टुमुत्सुकः ॥ २३ ॥

विध्वस्तमखिलं प्रेक्ष्य दुष्कृतैः क्षोभकारिणाम्।
परावर्तितनेत्रोऽसौ स्थितवान् खिन्नमानसः॥ २४॥

नवखालीकृतध्वंसप्रतीकारो विदर्भजैः।
हिन्दुभिः कृत इत्युक्तं महात्मा नान्वमोदत॥ २५॥

स तूवाच न युक्तोऽयं प्रतीकारक्रमः कृतः।
आत्महत्यासमानेयं वैरबुद्धिः परस्परम्॥ २६॥

ईदृग्भावनयाऽस्माकं दास्यमेव स्थिरीभवेत्।
दासश्च पशुभिस्तुल्यः पशुत्वान्मरणं वरम्॥ २७॥

पर्यन्ते गणयेत्सर्वो विपरीतधियाऽनया।
सर्वतोऽप्यधिकां स्वीयग्रामस्यैव स्वतन्त्रताम्॥ २८॥

अबोधयच्च ग्रामीणान् मुस्लिमेभ्यः प्रदीयताम्।
ततो विलुण्ठितं द्रव्यं गृहक्षेत्रादिकं च यत्॥ २९॥

छिन्नभिन्नविकीर्णानां वस्तूनां राशयोऽखिलाः।
अपसार्याश्च युष्माभिर्मार्जनीयाश्च वीथिकाः॥ ३०॥

यथा सद्यः परावृत्य स्वस्वगेहानि मुस्लिमाः।
रक्षिता निर्भयं ग्रामे निवसेयुः सुखं पुनः॥ ३१॥

मृदा गर्ताश्च संपूर्य विषमोद्धातिभूतले।
रचयध्वं विहाराय वाटिका ग्रामवासिनाम्॥ ३२॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये स्वराज्योद्घोषणा
नाम नवत्रिंशोऽध्यायः।



# चत्वारिंशोऽध्यायः

## आसियासम्मेलने गान्धिप्रवचनम् ।

अथाखण्डासियाखण्डदेशानां महती सभा ।
प्रारम्भे चैत्रमासस्य मिलिता देहलीपुरे ॥ १ ॥

त्रयस्त्रिंशज्जनाङ्गानि स्वस्वप्रतिनिधीन्सभाम् ।
प्रसिद्धान्प्रेषयामासु राजनीतिविशारदान् ॥ २ ॥

बभूवादृष्टपूर्वस्य सदसोऽस्याधिवेशनम् ।
कुरुपाण्डवयोः कालाच्छोणदुर्गाभिधे स्थले ॥ ३ ॥

सभाध्यक्षपदं पूज्यं वाग्मिनी श्रीसरोजिनी ।
अलञ्चकार निस्सीमनिजवाग्विभवोचितम् ॥ ४ ॥

महाङ्गणेऽस्य दुर्गस्य मण्डपो निरमीयत ।
यदन्तः सुखमासीरन्नर्धलक्षमिता जनाः ॥ ५ ॥

त्रयस्त्रिंशत्पताकाश्च परितः पीठवेदिकाम् ।
उच्छ्रिता मण्डपं चक्रुर्नेत्रासेचनकं परम् ॥ ६ ॥

ततः स्मृतिपथं नीत्वा प्रेक्षकाणां सरोजिनी ।
महाभारतकाव्यस्य कथाः काश्चिदवर्णयत् ॥ ७ ॥

अयं प्राचीनदुर्गस्य शिलाभित्तिचयो घनः ।
साक्षीचकार यः पूर्वं कुरुपाण्डवसंगरम् ॥ ८ ॥

स एवाद्य हि वर्षाणामसंख्यशतकोत्तरम् ।
प्रत्यक्षीकुरुते कार्यं नूत्नं संमेलनस्य नः ॥ ९ ॥

इत्यादिभाषणं कृत्वा निजवाक्यामृतेन सा ।
नन्दयामास चेतांसि सर्वेषां विबुधोत्तमा ॥ १० ॥

प्रीण्यासन् सभ्यवृन्दानि प्रस्ताव्यविषयक्रमात् ।
प्रथमं जातिसम्बद्धचर्चाविषयगोचरम् ॥ ११ ॥

द्वितीयं स्वस्वराष्ट्रस्य व्ययाल्पीकृतिचिन्तकम् ।
तृतीयं प्राच्यसंस्काररक्षाभ्युदयसाधकम् ॥ १२ ॥

पूर्वखण्डजनाः प्राप्ता देहलीं नगरोत्तमाम् ।
सस्मरुः प्राप्तमात्मानं साक्षात्स्वातन्त्र्यदेहलीम् ॥ १३ ॥

गान्धिः प्राप्तः सभामादौ न चक्रे तत्र भाषणम् ।
परं प्रतिनिधीभूतैः कथालापं चकार सः ॥ १४ ॥

'जगदैक्यं समुद्दिश्य महात्मन् ब्रूहि ते मतम् ।'
इति केनापि पृष्टः सन् प्रत्युवाच मुनिर्यथा ॥ १५ ॥

'भवितैक्यं न चेल्लोके जीवितुं नोत्सहे भुवि ।
मयि जीवति स स्वप्नः स्पृहये सफलीभवेत्' ॥ १६ ॥

पप्रच्छ चीनदेशीयः कश्चिद् हान्लिबुनामकः ।
समुद्दिश्यासियासंस्थाविनिर्माणं मुनेर्मतम् ॥ १७ ॥

( महात्मोवाच )

धन्यं नितान्तमात्मानं भारतं मन्यते किल ।
महती परिषदस्माद्वियं संमिलिताऽत्र वः ॥ १८ ॥

स्वातन्त्र्यगृहदेहल्यामिदानीं भारतं स्थितम् ।
स्वयं प्रभुत्वमिच्छामः प्रभुमन्यं न सर्वथा ॥ १९ ॥

नानादिग्देशतो यूयं सोत्साहमिह संगताः ।
प्रत्यब्दं चेद् भवेदीदृङ्मेलनं तद्धितावहम् ॥ २० ॥

स्वदेशं नीयतामस्य मेलनस्य स्मृतिः प्रिया ।
प्रयतध्वं च निर्मातुं सत्यदैवतमन्दिरम् ॥ २१ ॥

किमिमे प्राच्यदेशीयाः संगता योद्धुमिच्छया ।
सह पश्चिमखण्डस्थैः किं वाऽमेरिकभूजनैः ॥ २२ ॥

इति कांश्चन जिज्ञासूनुवाचानर्थशङ्किनः ।
नैवं भोः सर्वथा नैवमिति मे साग्रहं वचः ॥ २३ ॥

नास्त्येवं भारतस्यात्र व्यवस्था न च वाञ्छितम् ।
ध्येयं चेत् तादृशं तस्य भवेयमतिदुःखितः ॥ २४ ॥

अहिंसयैव संप्राप्य स्वातन्त्र्यं भारतावनिः ।
न स्वप्नेऽप्युपयुञ्जीत तदन्यस्य नियन्त्रणे ॥ २५ ॥

यथा हि स्वस्वलाभाय पाश्चात्यैः पूर्वखण्डजाः ।
नियन्त्रिताः प्रजा बह्वयस्तथा नात्र भविष्यति ॥ २६ ॥

पूर्वखण्डमिदं कार्यं महत् पाश्चात्यराष्ट्रवत् ।
इति सर्वैर्विनिश्चित्य सभास्थानं विसृज्यताम् ॥ २७ ॥

प्राच्यसंमेलनं भूयाच्चिपमेनात्र भारते ।
इत्याशास्याभिवन्दे वः पुनर्दर्शनकामुकः ॥ २८ ॥

द्वितीयेऽथ दिने गान्धिरुपस्थायासियासभाम् ।
प्रगल्भं भाषणं चक्रे सर्वश्रोत्रमनोहरम् ॥ २९ ॥

अयि प्राज्ञा विदेशीयगिरा यद्यपि भाषणम् ।
करिष्यामि तथाप्यादौ न प्रार्थ्या खलु वः क्षमा ॥ ३० ॥

विदितं किल सर्वेषां यदांग्लगिरमन्तरा ।
दृश्यते नापरा भाषा सर्वराष्ट्रप्रसारिणी ॥ ३१ ॥

दूरासीना इतः सभ्या यदि स्युः श्रोतुमक्षमाः ।
दोपभागत्र भविता यन्त्रं नादाभिवर्धकम् ॥ ३२ ॥

यथास्थितं न युष्माभिर्भारतं ह्यवलोकितम् ।
न देशाभ्यन्तरग्रामान्यूयमद्यापि संगता ॥ ३३ ॥

मद्रमोहमयीदिल्ल्यः कल्कत्ता ल्वपुर्यपि ।
एताः पाश्चात्यसंस्कारैर्वर्तन्ते परिवर्तिताः ॥ ३४ ॥

तत्त्वविल्केम्बदेशीयः पुरासीदाफ्रिकाभुवि ।
मित्रं मे स्वल्पसंख्याकलोकानां पक्षपोषकः ॥ ३५ ॥

न केवलमहं हीनपक्षस्यन्तार्गतोऽभवम् ।
अपि च न्यायवादी सन् भृतिभुग्वृत्तिमाश्रितः ॥ ३६ ॥

प्रथमो ह्यहमेवासं भृतकन्यायवादिनाम् ।
प्रायो भृतकशब्दार्थो युष्माभिरवगम्यते ॥ ३७ ॥

अथैकदाब्रवीन्मित्रं शृणु कथामिमाम् ।
त्वदर्थमाङ्गलभाषायां मया सेयमनूदिता ॥ ३८ ॥

फ्रान्सदेशात्पुरा जग्मुः केचिद्वैज्ञानिकास्त्रयः ।
सत्यस्यान्वेषणार्थाय प्राच्यदेशान् पृथक् पृथक् ॥ ३९ ॥

आङ्ग्लैराक्रमणात्पूर्वं प्राङ्गोगल्कालतोऽपि च ।
तेषामेकतमोऽभ्यागात्पर्यटन्भारतावनिम् ॥ ४० ॥

स च सूक्ष्मदृशाऽपश्यद्बहुजातिसमुद्भवान् ।
पुमर्भकाङ्गनालोकान्वृथा सत्यगवेषकः ॥ ४१ ॥

स किङ्कर्तव्यतामूढो ग्रामाद्ग्रामं परिभ्रमन् ।
काञ्चिद्ग्रामटिकां प्राप्य जगाम क्षुल्लकोटजम् ॥ ४२ ॥

श्वपचस्य कुटीरेऽस्मिन् विदेशीयोऽवसत् सुखम् ।
अन्विष्यमाणसत्यं च तत्र साक्षाचकार सः ॥ ४३ ॥

द्रष्टुकामा भवन्तश्चेद् भारतं निजरूपतः ।
श्वपाकस्य कुटीरे तद् ग्रामस्य द्रष्टुमर्हथ ॥ ४४ ॥

ग्रामाणां सप्त लक्षाणि तादृशां सन्ति भारते ।
तत्र जीवन्ति दीनानामष्टात्रिंशच कोटयः ॥ ४५ ॥

पश्येयुः कोऽपि युष्माकं यदि ग्रामान् यदृच्छया ।
स तेषां दर्शनान्नूनं मोहितो न भविष्यति ॥ ४६ ॥

न स्वर्गीयप्रदेशास्ते यमभूवर्जातुचित्पुरा ।
इदानीं तु भवन्त्येते परं कचराशयः ॥ ४७ ॥

नासीत्तेषां दशा पूर्वमीदृशीति ब्रवीम्यहम् ।
स्वदीर्घानुभवादेव नैतिहासिकवर्णनात् ॥ ४८ ॥

आसेतोरातुषाराद्रिं भारते पर्यटंश्चिरात् ।
अद्राक्षं मानुषव्यक्तीराता निष्प्रभलोचनाः ॥ ४९ ॥

अत्रैव भारतं दृश्यं नगरेषु न दृश्यते ।
अत्र नीचकुटीरेषु मलराशिभिरावृतः ॥ ५० ॥

दीनो धारयति प्राणान् विनीतो मलशोधकः ।
तन्निरूपणतो ज्ञेया दशा देशस्य वास्तवी ॥ ५१ ॥

अपरं च मयाधीता ग्रन्था आंग्लैः प्रकल्पिताः ।
यत्रैतिहासिकैर्लोकचारित्रमुपवर्णितम् ॥ ५२ ॥

आंग्लैर्विनिर्मितेभ्यश्च ग्रन्थेभ्यो हि वयं चिरात् ।
न तु मूलप्रग्रन्थेभ्य इतिहासमधीमहे ॥ ५३ ॥

अयं भारतवर्षस्य विजयः पूर्वसंस्कृतेः ।
यदेषा किल पाश्चात्यैर्गृहीता च प्रसारिता ॥ ५४ ॥

किञ्च वर्षसहस्रेभ्यः पूर्वमध्यात्मसंस्कृतिम् ।
प्राच्याः पाश्चात्यलोकाय ज्ञानिनः प्रत्यपादयन् ॥ ५५ ॥

बभूव प्रथमस्तेषां झरथुष्ट्राभिधो बुधः ।
अन्वगात्तं च सिद्धार्थः पूतात्मा गोतमो मुनिः ॥ ५६ ॥

* मोशसोऽभूत्ततः क्रिस्तोऽनन्तरं च महम्मदः ।
यैः सर्वैः पाविताः प्राच्यभूमयः स्वस्वजन्मना ॥५७॥

श्रीरामकृष्णयोस्तद्वदन्येषां ज्ञानतेजसाम् ।
नामानि न गृहीतानि लोकेष्वल्पप्रसिद्धितः ॥५८॥

---

* यहूदीनामधेयम् ।

न कोऽपि भूतलेऽद्यापि समाकर्णि मया नरः।
पूर्वोक्तैः पञ्चभिस्तुल्यः प्राच्यखण्डसमुद्भवैः ॥ ५९ ॥

क्रैस्तधर्मस्तु वैरूप्यं प्राप पाश्चात्यभूमिगः।
इति वक्तुमहं दूये तदुक्तैरधिकैरलम् ॥ ६० ॥

नगरेषु स्वरूपेण भारतं न विलोक्यते।
इति बोधयितुं युष्मान् प्रसङ्गात्सर्वमीरितम् ॥ ६१ ॥

प्रचलन्पुरतोऽस्माकं संहारोऽस्त्यतिगर्हितः।
भारताद्बहिरेतस्य संस्मृतिर्न तु नीयताम् ॥ ६२ ॥

संदेशः पूर्वखण्डस्य ज्ञातव्यः पृथगेव वः।
नाणुस्फोटानुकाराद्वा न वा पाश्चात्यदर्पितः ॥ ६३ ॥

भवन्तो यदि सन्देशं पाश्चात्येभ्यः प्रदित्सवः।
प्रेमसत्यप्रधानेन तेन भाव्यं हि सर्वथा ॥ ६४ ॥

प्रजाधिपत्यसापेक्षे साम्प्रतं जगति स्थिते।
रूढो भवति संदेशो दीनानामपि चेतसि ॥ ६५ ॥

वैरबुद्धिं विनिर्धूय विवेकधिषणाबलात्।
भारतं लप्स्यते पूर्णं विजयं पश्चिमोपरि ॥ ६६ ॥

संदेशः पूर्वमस्मभ्यं यो दत्तः प्राच्यकोविदैः।
समस्तैस्तद्रहस्यं चेदस्माभिरवगम्यते ॥ ६७॥

यदि चानुसरिष्यामः सर्वे तत्प्राज्ञबोधनाम्।
तदा भारतवर्षस्य विजयः पूर्णतामियात् ॥ ६८ ॥

आस्माकविजयेनैते नूनं पाश्चात्यदेशजाः।
स्वयं प्रीता भविष्यन्तीत्यस्ति मे प्रत्ययो दृढः ॥ ६९ ॥

प्राज्ञवादानिमे श्रोतुमुत्सुकाः सन्ति साम्प्रतम्।
अण्वस्त्रप्रमुखीभावाकुलधैर्या हि ते स्थिताः ॥ ७० ॥

* आण्वास्त्रं तच्च पाश्चात्यदेशान् सर्वांन्न केवलम् ।
समस्तधरणीं चापि क्षणादुन्मूलयेद् ध्रुवम् ॥ ७१ ॥

तथैवं सति यः क्रैस्तवेदोक्तः प्रलयो भुवः ।
स एव कार्यतः सिद्धो बभूवेति वितर्कयेत् ॥ ७२ ॥

शुध्याभिर्जगते वाच्यं तत्पापं तद्दुरात्मता ।
अयमेव हि नः पन्था दर्शितः पूर्वशिक्षकैः ॥ ७३ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये आसियासम्मेलने
गान्धिप्रवचनं नाम चत्वारिंशत्तमोऽध्यायः ॥



* Atom Bomb

# एकचत्वारिंशोऽध्यायः

## कोराणपठनाक्षेपनिरासः ।

समाप्य भाषणं गान्धिः श्वपाकशिबिरं ययौ ।
यथाकालमनुष्ठातुं प्रदोषोपासनाविधिम् ॥ १ ॥

अथ कोराणपठने प्रतिकूलमतिर्भृशम् ।
पतिरोद्धुं युवा कश्चित्सहसाभूत्समुद्यतः ॥ २ ॥

निष्कासितेऽङ्गणात्सद्यः कुमारे कैश्चनानुगैः ।
मुहूर्तमकरोद्गान्धिर्विरामं प्रार्थनाविधेः ॥ ३ ॥

कोराणभगवद्गीता–श्रीमद्रामधुनादिषु ।
पठितेष्वब्रवीद्गान्धिः किञ्चित्खिन्नमना यथा ॥ ४ ॥

हिन्दुना यत्कृतं यूना तदयोग्यं न केवलम् ।
सभानियमधर्मस्य व्यतनोच्च व्यतिक्रमम् ॥ ५ ॥

ईदृक् प्रवर्तयेत्कृत्यमत्याहितपरम्पराम् ।
विदर्भनवखाल्यादिप्रदेशेषु यथा पुरा ॥ ६ ॥

विनिश्चितधिया तस्मात् त्यजेद्दुष्टविचेष्टितम् ।
कालेऽस्मिन् विषमे शान्तिं रक्षेत्प्राणव्ययादपि ॥ ७ ॥

श्रावं श्रावं विदर्भाणां घोरकृत्यपरम्पराम् ।
मुस्लिमान् प्रति दूनोऽहं लज्जानतशिराः स्थितः ॥ ८ ॥

वैरशुद्धिरिदानीं तस्याः पवनदावनौ ।
क्षोभाग्निः पक्षयोर्मध्ये प्रज्वलत्येव घस्मरः ॥ ९ ॥

अस्ति मित्रं सहायश्च मृत्युरथ शरीरिणाम् ।
ते हि धन्याः प्रवीरा ये कृतान्तातिथ्यमागताः ॥ १० ॥

ये तु कृत्वापि पापिष्ठं कर्म जीवन्ति पापिनः ।
दूष्यास्ते दण्डमर्हन्ति सर्वज्ञात्परमेश्वरात् ॥ ११ ॥

वृत्तिर्वन्यशरारूणां त्यज्यतां परहिंसनम् ।
क्रियतां हिन्दुभिः प्रीतिर्विश्वासो मुस्लिमैः पुनः ॥ १२ ॥

अन्तर्गतविरोधेन हिन्दुमुस्लिमयोर्मिथः ।
भारतं न किलात्मानं कलङ्कयितुमर्हति ॥ १३ ॥

परेद्यवि च विक्षेपो व्यधायि प्रार्थनाविधेः ।
कैश्चित्कोराणपाठस्य द्वित्रलोकैर्निषेधकैः ॥ १४ ॥

भवानधिकृतः केन हिन्दूनां देवमन्दिरे ।
कोराणपठनायेति पर्यपृच्छन्नमी मुनिम् ॥ १५ ॥

( महात्मोवाच । )

'अन्त्यजानां समाजस्य भवत्येष सुरालयः ।
न तैराक्षिप्यते क्वापि ममात्र प्रार्थनाक्रमः ॥ १६ ॥

अस्म्यहं समजातीयः स्वैरं च मलशोधकः ।
अधिकारोऽस्ति मे तस्माद्यथेष्टप्रार्थनाविधौ ॥ १७ ॥

निषेधन्तो जना नैते भवन्ति मलशोधकाः ।
भवितुं वा न चेच्छन्ति तत्किमुक्तेन भूयसा ॥ १८ ॥

परेद्युः प्रार्थनाभूमौ भक्तान् गान्धिरभाषत ।
पत्रद्वारादिद्यत्कश्चिन्मामज्ञातचरो जनः ॥ १९ ॥

जहीहि म्लेच्छगीतानां पाठं भो धर्मकञ्चुकिन् ।
नोचेन्निर्गम्यतां सद्यो वाल्मीकिमन्दिरादिति ॥ २० ॥

अतः पृच्छामि वः सौम्याः किमस्मिन्मेलके जनः ।
कोराणपठनाक्षेप्ता ब्रूत यः कोऽपि विद्यते' ॥ २१ ॥

इत्युक्ते बहवः प्रोचुः क्षणादुच्छ्रितपाणयः ।
इस्लामग्रन्थपाठो नः सर्वथा नास्ति सम्मतः ॥ २२ ॥

आक्षेपवचनं श्रुत्वा संयमी स निराकुलः ।
प्रार्थनाविधिमुत्सृज्य मिलितानब्रवीद्यथा ॥ २३ ॥

'अयि सौम्या मयोक्तस्य पूर्वेद्युः प्रार्थनोत्तरम् ।
कच्चिदग्राहि युष्माभिः सत्यता चारुतापि वा ॥ २४ ॥

बालेनापि कृताक्षेपस्त्यजामि प्रार्थनामहम् ।
तदेतन्न तु युष्माभिः कातर्यमिति मन्यताम् ॥ २५ ॥

हिंसायाः परिहाराय प्रार्थना त्यज्यते मया ।
आबाल्याद्वल्लवद्गुद्धा मया हिंसापिशाचिका ॥ २६ ॥

नाहं निहन्यमानोऽपि विरमेयं कथंचन ।
रामस्य रहिमस्यापि दिव्यनाम्नोः प्रकीर्तनात् ॥ २७ ॥

तयोरकीर्तयन्नाम्नी कथं स्थातु हि शकुयाम् ।
हिन्दुमुस्लिमयोरग्रे नवखालीविदर्भयोः ॥२८ ॥

न कुर्यात्कोपविद्वेषौ प्रार्थनाप्रतिरोधिषु ।
केवलं दयनीयास्ते कुधूद्वेषौ धर्महिंसकौ ' ॥ २९ ॥

निर्यातुं सदनं यावन्महात्माऽभवदुद्यतः ।
जनौघे विमतस्थानां कलहस्तावदुत्थितः ॥ ३० ॥

तिष्ठन्नेवाब्रवीद्गान्धिः कोपावेशो निरर्थकः ।
पञ्चाम्नुविप्लवज्वालाशमोपायं विधीयताम् ॥ ३१ ॥

परेद्युः प्रार्थना सायं निर्विघ्नं समवर्तत ।
अतः प्रीतमना गान्धिरब्रवीन्मिलितान् जनान् ॥ ३२ ॥

'इमे हरिजनाः सर्वे भवन्ति भ्रातरो मम ।
मयैवानेकशः प्रोक्तं यदस्मि मलशोधकः ॥ ३३ ॥

मलस्य मार्जनं धर्मो हिन्दूनामविशेषतः ।
न केवलं निशान्तानां मनसां च धियामपि ॥ ३४ ॥

सत्यं धर्मेषु सर्वेषु हिन्दुः पश्यति सात्त्विकः ।
सारं कोराणपद्यानां सर्वधर्मेषु दृश्यते ॥ ३५ ॥

अनादिकालतो वेदास्तथोपनिषदां गणः ।
विद्यन्ते न त्वमी ज्ञाताः साङ्गोपाङ्गतया जनैः ॥ ३६ ॥

हिन्दुधर्मो महानेष तितिक्षागुणशेवधिः ।
सर्वार्थक-बलीकार-सामर्थ्यादैक्यसाधकः ॥ ३७ ॥

आसीत्काचित्पुरा साध्वी धर्मनिष्ठाऽन्त्यजाङ्गना ।
पृच्छकं प्रत्यवादीत्सा युवानं चैकदा यथा ॥ ३८ ॥

भगवानखिलव्यापी नियन्ता मनसो नृणाम् ।
भाषाद्विनिरपेक्षोऽयं पूज्यो ह्येकाग्रचेतसा ॥ ३९ ॥

अतः कोराणगीतीनां विरोधो नोपपद्यते ।
प्रतिषेधो ह्यधर्म्यः स्याद् हिन्दुधर्मानुसारिणाम् ॥ ४० ॥

कृतज्ञतां वहाम्येष श्रीकोराणविरोधिषु ।
प्रदत्तोऽवसरस्तैर्हि हृदन्तःशोधनाय मे ॥ ४१ ॥

यदेतान्न समाधातुमशकं तव्यचिन्तयम् ।
हृदये किल्बिषं मे स्याद्यत्किञ्चित्तद्विरोधकम् ॥ ४२ ॥

भजनस्य रहस्यार्थमवेदिष्यन्नमी यदि ।
साक्षाद्दिव्योपहारं तदमंस्यन्त तदा ध्रुवम् ॥ ४३ ॥

नाम्नोर्युगपदुच्चारं रामस्य रहिमस्य च ।
कुर्वाणं यदि मां हन्युर्निधनं स्यान्मुदे मम ॥ ४४ ॥

सर्वमेव शुभं हि स्यात्क्रोधमत्सरवर्जनात् ।
कुतः पाप्माऽस्तीशाचा भगवन्नामकीर्तने ॥ ४५ ॥

अज्ञातदिव्यवेदार्थो हिन्दुधर्मं न दूषयेत् ।
यथेष्टं पूजयेदीशमित्यादिशति हि श्रुतिः ॥ ४६ ॥

सेवकः सन्महेशस्य तदादेशं विना क्वचित् ।
न पिबामि न चाश्नामि नान्यत्किञ्चित्करोमि वा ॥ ४७ ॥

जनः सम्यक्तरां विद्यात्कालेन मदनुष्ठितम् ।
तावत्करोमि कर्तव्यमीश्वरप्रेरणा यथा ' ॥ ४८ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये कोराण-पठनाक्षेप-
निरासो नाम एकचत्वारिंशत्तमोऽध्यायः ॥



# द्वाचत्वारिंशोऽध्यायः

## राम-रहीमसाम्यनिदर्शनम् ।

पञ्चमेऽथ दिने नासीत् प्रदोपप्रार्थनाङ्गणे ।
प्रार्थनारीतिमुद्दिश्य कश्चिदन्यो वितण्डकः ॥ १ ॥

प्रार्थनादिवसे षष्ठे कीर्तनञ्च व्यधीयत ।
रामस्य रहिमस्यापि कृष्णस्य करिमस्य च ॥ २ ॥

तथा च रामधुन्गीतं रमणीयमगीयत ।
प्रीतचेता मुनिस्तस्मात्तदुद्दिश्याब्रवीत्तदा ॥ ३ ॥

श्रावं श्रावमिदं रामधुन्गीतं सुमनोहरम् ।
नवखाल्याः शुभालोकं प्रत्यक्षीकृतवानहम् ॥ ४ ॥

अगीयत हि तत्रैतद्भजनं प्रार्थनाङ्गणे ।
ग्रामाद्ग्राममटंश्चापि जगौ रामधुनं जनः ॥ ५ ॥

अद्यानुष्ठीयते देशे प्रजाभी राष्ट्रियोत्सवः ।
यज्ञियैस्तन्तुनिर्माणैरुपवासैश्च पूजनैः ॥ ६ ॥

रामस्य रहिमस्यापि नामनी प्रार्थनोत्तरम् ।
हृदये चेन्निरूढे वस्तदेतत्परमं शुभम् ॥ ७ ॥

केचिन्निन्दन्ति मां लोका भारतच्छेदकारणात् ।
अनवाप्योत्तरं मत्तो दक्षं मां मन्वतेऽपरे ॥ ८ ॥

चारुपञ्चनदे क्षोभवह्निना प्रज्वलत्यपि ।
सुस्थितोऽस्यत्र देहल्यामित्यन्ये चाऽऽक्षिपन्ति माम् ॥ ९ ॥

पश्चाम्बुविपयस्थानां नेत्रवारि मिमार्जिषुः ।
मित्रैराहूतमात्रोऽहं तत्र यास्यामि निश्चितम् ॥ १० ॥

महाभारतकाव्ये प्राक् कवीन्द्रेण हि वर्णितम् ।
कुरुपाण्डवयोर्युद्धमन्योन्यक्रोधहेतुकम् ॥ ११ ॥

आहवे तुमुले तस्मिन्नवसानमुपागते ।
अवाशिष्यन्त सतैव वक्तुं घोरकथां भुवि ॥ १२ ॥

हिन्दुमुस्लिमसिक्खेषु जिघांसुषु परस्परम् ।
महाभारतयुद्धेन तुल्यो भाति च विप्लवः ॥ १३ ॥

मृत्योरपरिहार्यत्वं स्मरन्तः सर्वदेहिनाम् ।
म्रियन्ते यदमी कुर्युर्हिन्दुस्थानं हि नूतनम् ॥ १४ ॥

सूक्तिरत्नानि हि प्राहुर्गीताध्याये द्वितीयके ।
यथा सत्पुरुषो जीवेद्यानि कर्माणि चाचरेत् ॥ १५ ॥

उपदेशं च गीतायाः पठित्वा परिशीलयेत् ।
अवगत्य च तत्सारं दृढं चेतसि धारयेत् ॥ १६ ॥

ततो वेद्यं भवेत्प्राप्तुं स्वातन्त्र्यं पात्रतास्ति नः ।
संप्राप्य रक्षितुं तच्च प्रभवेम न चेत्यपि ॥ १७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये रामरहीमसाम्यनिदर्शनं नाम
द्वाचत्वारिंशोऽध्यायः ॥

# त्रयश्चत्वारिंशोऽध्यायः

## महात्मानुशासनम् ।

अथैकदाब्रवीद्गान्धिः पार्थनोत्तरभाषणे ।
देशच्छेदोद्भवान् कांश्चिद् भाव्यनर्थान् वितर्कयन् ॥ १ ॥
" देशद्वारमनुप्राप्ता साम्प्रतं नः स्वतन्त्रता ।
तथापि स्थितवान् लोकः सर्वथोत्साहवर्जितः ॥ २ ॥
देशस्य खण्डनं मन्ये तन्मनोहतिकारणम् ।
तेन राष्ट्रद्वयं हि स्यात्पृथक्सैन्यसमुद्यतम् ॥ ३ ॥
सेनाविभजने यत्ना दृश्यन्ते किल सर्वतः ।
सामान्या देशरक्षार्थे न स्यात्सेनेति निश्चितम् ॥ ४ ॥
सैन्यमन्योन्यहत्यार्थे वृथा तत्पोषणव्ययः ।
उत्कर्षः पुरुषार्थो वा को भवेद्देशखण्डनात् ॥ ५ ॥
सति लोके निरानन्दे भारतस्य स्वतन्त्रता ।
किमपेक्ष्या चिराभीष्टप्रियार्थत्यागसिद्धये ॥ ६ ॥
त्रिंशत्संवत्सरस्थायिस्वातन्त्र्याहवनाटके ।
एष मुख्यनटो भूत्वा करोम्यन्तर्गवेषणम् ॥ ७ ॥
अत्युदार इति ख्यातः पूर्णस्वातन्त्र्यसंगरः ।
किं नु पर्यवसानेऽयं जायतामयशस्करः ॥ ८ ॥
इत्युक्त्वा न्यगदद्भूयः श्रौतमार्षमिदं वचः ।
तमसो नय देवास्मान् परं ज्योतिः प्रसीद नः ॥ ९ ॥
ततो मासद्वयं श्रीमान् गान्धिश्चक्रे गतागतम् ।
विदर्भपाटलीपुत्रनवखालीपुरादिषु ॥ १० ॥
क्षोभाग्नेर्दह्यमानेभ्यः सर्वतो दारुणार्चिभिः ।
विदर्भवंगदेशेभ्यो नैच्छद्गन्तुं बहिर्मुनिः ॥ ११ ॥
अभ्यर्थितोऽपि विश्रान्तिचिकित्सालयसेवकैः ।
आह्वानमुरलीपञ्चगणयोः स निराकरोत् ॥ १२ ॥

अथ वैशाखमासान्ते कलकत्तानगरे वसन् ।
श्रीमता नेहरूणाहूतः पुनर्दिल्लीं समासदत् ॥ १३ ॥

वल्लभार्यैस्तदा नेहरूर्न्यवसन् मसुरीगिरौ ।
सेवमानोऽल्पविश्रान्तिं मन्दशीतानिलाञ्चिते ॥ १४ ॥

ग्रीष्मचण्डोष्मणा तप्तां दिल्लीं तात त्यजाधुना ।
एहि तावदिमं शैलमिति नेहरूर्याचते स्म तम् ॥ १५ ॥

न यावत्पक्षयोर्मध्ये सौहार्दमुदितं पुनः ।
न तावदुत्सहे वत्स सेवाक्षेत्रान्निवर्तितुम् ॥ १६ ॥

न त्यजन्ति मिथो यावद्विद्वेषं हिन्दुमुस्लिमाः ।
चिन्तयिष्ये न विश्रान्तिं तावदित्यब्रवीद्यतिः ॥ १७ ॥

प्रत्यहं वृद्धिमायान्ती विप्लवाग्नेः प्रचण्डता ।
मुनेः शान्तिप्रियस्यासीद्बलान्मर्मनिकृन्तनी ॥ १८ ॥

निजस्वास्थ्यमनादृत्य जनानार्तान् सिषेविषुः ।
भग्नाशो निजगादेत्थं कंचिन्मित्रं प्रशान्तधीः ॥ १९ ॥

भस्मीकृतोऽस्मि यन्नाहं ज्वालाभिर्वेष्टितोऽपि सन् ।
किमीशस्य प्रसादोऽयमथवैषा विडम्बना ॥ २० ॥

अद्यत्वे भारते हन्त स्थानं मे न हि विद्यते ।
पञ्चविंशं शतं वर्षाण्युत्सहे नैव जीवितुम् ॥ २१ ॥

जीवेयं वत्सरौ प्रायो नाधिकं किल कामये ।
भारते विप्लवग्रस्ते कथं वा ध्रियतां वपुः ॥ २२ ॥

अधुना व्याप्नुते देशे संग्रामायुधनिर्मितौ ।
का गतिर्ग्रामशिल्पानामहिंसाचिह्नरक्षिणाम् ॥ २३ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये महात्मानुशासनं
नाम त्रिचत्वारिंशोऽध्यायः ॥



# चतुश्चत्वारिंशोऽध्यायः

## गान्धेरनुशासनम् ।

क्षणेऽस्मिन् पाटलीपुत्रे विप्लवः पुनरुत्थितः ।
दुःखार्तान् सेवितुं तत्र ययौ गान्धिश्च सत्वरम् ॥ १ ॥

प्रान्तीयमन्त्रिणा सार्कं ग्रामाद्ग्रामं परिभ्रमन् ।
विध्वंसविकृतीर्वीक्ष्य व्यथितात्माऽभवद्भृशम् ॥ २ ॥

अनुशिष्य जनानार्तानहिंसामेव रक्षितुम् ।
विश्रान्त्यै पाटलीपुत्रं प्रत्यगात्सोमवासरे ॥ ३ ॥

मौनव्रतदिने तस्मिन् प्रार्थनामेलने मुनिः ।
लेखेनाकथयत्स्पष्टमानुशासनिकं वचः ॥ ४ ॥

अस्त्येतद्दुष्कृतां राज्यं परिवेवेष्टि यत्र नः ।
प्रतिरोद्धुं तदेवाद्य चिन्तयेऽहं दिवानिशम् ॥ ५ ॥

शोचनीयदशा सेयं न परं भारतेऽधुना ।
जगत्यामखिलायां च रूढमूलाऽवतिष्ठते ॥ ६ ॥

सर्वं नः सम्यगस्तीति मन्यन्ते यदि हिन्दवः ।
तदा नूनममी भ्रान्ताः कुर्वन्त्यात्मप्रतारणाम् ॥ ७ ॥

हिन्दुधर्मे परां श्रद्धां वहन्नेव ब्रवीम्यहम् ।
यद्वयं हास्यतां यामस्ताद्दृशैर्मूर्खचिन्तनैः ॥ ८ ॥

परैराक्रान्तराज्यस्य पुनः स्वीकरणोद्यमे ।
न खलु स्वैरवृत्तानां दुष्कृतिः स्यादुपक्रमः ॥ ९ ॥

भगवत्प्रार्थनामूमौ कृतं यत्प्रतिबन्धनम् ।
तदेव स्वैरवृत्तानां दुष्कृतेः पूर्वसूचनम् ॥ १० ॥

प्रोक्तं दुष्कर्मणां मूलं परधर्मासहिष्णुता ।
जायन्ते व्याधयः सर्वे बहनर्थकरास्ततः ॥ ११ ॥

हिन्दवो मुस्लिमाश्चापि विमृशन्तु मनीषया ।
समक्षमेव यत्सर्वं प्रचलत्यत्र सर्वतः ॥ १२ ॥

स्वातन्त्र्याप्तेः पुरैवैतद्विनाशोपायशिक्षणम् ।
अस्माभिः क्रियते स्मेति मा वोचन्वंशजा इतः ॥ १३ ॥

आशासेऽध्यापकाः सर्वे विमुक्ताः परशासकैः ।
स्वधर्ममभिरक्षेयुर्निजप्राणव्ययादपि ॥ १४ ॥

दिष्टया तेऽधिकृता यूनां शुभसंस्कारकल्पने ।
धर्म्यामुत्पादयेयुस्ते प्रवृत्तिं तेषु सर्वथा ॥ १५ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये गान्धेरनुशासनं नाम
चतुश्चत्वारिंशत्तमोऽध्यायः ॥

ध्यायं ध्यायं स्वदेशस्य महात्मा मातिखण्डनम् ।
शङ्कितात्याहितं वक्ति दैनिकप्रार्थनोत्तरम् ॥ १२ ॥

"अयि भोः श्रूयतां तावद्वचो मे बुद्धिपूर्वकम् ।
अनुशास्मि स्वदेशस्य प्रजानामेव शर्मणे ॥ १३ ॥

कृच्छ्रे गत्यन्तराभावात्स्वीकृतो राष्ट्रनायकैः ।
भारतस्याङ्गविच्छेदः सम्राट्तन्त्रेण निश्चितः ॥ १४ ॥

राष्ट्रसङ्घाय न द्वेष्टि देशजस्तस्य कारणात् ।
यद् दैवादनिवार्यं तत्परिहर्तुं न शक्यते ॥ १५ ॥

हठाद्धि राष्ट्रसंघस्तां प्रापितोऽभूत्परिस्थितिम् ।
इत्यस्माभिर्न विस्मर्यं तदधर्मोऽस्य निन्दनम् ॥ १६ ॥

लघूकर्तुं भवत्क्लेशं फलितार्थं ब्रवीमि वः ।
हिन्दुमुस्लिमसिक्खानां न कस्यापि क्षतिस्ततः ॥ १७ ॥

राज्ञः प्रतिनिधिर्यद्यत्कृतवानिह तत्पुनः ।
जनैरन्योन्यसंमत्या शक्येत कर्तुमन्यथा ॥ १८ ॥

पक्षयोरुभयोर्मध्ये कृतसन्धानसाहसः ।
सम्राट्प्रतिनिधिर्धीमानभिनन्दनमर्हति ॥ १९ ॥

विफलीभूतयत्नोऽसौ सर्वोपायश्रमैरपि ।
निश्चिकाय तदेव स्यादनुकूलं विधानकम् ॥ २० ॥

अनायकत्वमापद्येत् भारतं न कथञ्चन ।
प्रयत्नानकरोत्सर्वानीदृशान्राजवल्लभः ॥ २१ ॥

श्रीलभ्यानुनेष्यामि जिन्नं सिद्धमनोरथम् ।
अन्यपक्षान् समाह्वातुं तथा राष्ट्रसमासदः ॥ २२ ॥

यथा सर्वे समालोच्य विनैवाङ्ग्लनियन्त्रणाम् ।
कल्पयिष्यामहे नूनं राज्यभारक्रमं स्वतः ॥ २३ ॥

कालक्रमेण भूयोऽपि विभागौ द्वावपि स्वयम् ।
आशासे भारतस्येमौ संयुक्तौ संभविष्यतः ॥ २४ ॥

हिन्दूनामाधिपत्यं स्याद्भारते न चिरादिति ।
विशङ्कन्ते प्रमादेन हन्त मुस्लिमसांघिकाः ॥ २५ ॥

ये जना अत्र संजाताः पोषिताः शिक्षितास्तथा ।
जन्मभूमिरियं तेषां सर्वेषां भारतावनिः ॥ २६ ॥

न किं पञ्चनदः सिक्खहिन्दुक्रिस्तानुयायिनाम् ।
यहूदिपारसीकानां जन्मभूः स्वनिवासिनाम् " ॥ २७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये लोकसांत्वनं
नाम पञ्चचत्वारिंशोऽध्यायः ॥



# षट्चत्वारिंशोऽध्यायः

## देशखंडनम् ।

आसीन्महात्मनो यस्मात्परेद्युर्मौनवासरः ।
तस्मादपाठि तल्लेखः सायं सदसि तद्यथा ॥ १ ॥

"स्वीकृतं राष्ट्रसङ्घेन हन्त देशस्य खण्डनम् ।
तदेतन्न मया रुद्धमत्र वक्ष्येऽद्य कारणम् ॥ २ ॥

ज्ञात्वा प्रतिनिधिद्वारा भूयिष्ठानामसंमतिम् ।
प्रातिकूल्यमहं देशविच्छेदे प्रागघोषयम् ॥ ३ ॥

दृश्यते त्वद्य विच्छेदे संमतिः सार्वलौकिकी ।
नोत्सहे स्वमतं तस्माल्लोकान् ग्राहयितुं हठात् ॥ ४ ॥

जयेदसत्यं सत्येन तथा हिंसामहिंसया ।
अक्षमां क्षमयोष्णं च शीतेनेत्यनुशासनम् ॥ ५ ॥

यद्वर्षैस्त्रिंशताभ्यस्तं देशजैस्तद्धि विस्मृतम् ।
इदानीं ते निजच्छायामपि दृष्ट्वा विशङ्किताः ॥ ६ ॥

अग्रणीस्त्वं भवास्माकं भारतच्छेदरोधने ।
इति मामवदन् केचित्कारणान्तरमाश्रिताः ॥ ७ ॥

मूलतो मद्विभिन्नैस्तैरहं सङ्गमवर्जयम् ।
तेजस्तिमिरवत्प्रेमद्वेषौ नैकत्र तिष्ठतः " ॥ ८ ॥

अथामेरिकदेशीयस्तत्काले कोऽपि नाविकः ।
संदिदृक्षुर्महात्मानं चाण्डालशिबिरं ययौ ॥ ९ ॥

स च हस्ताक्षरं गान्धेर्जिघृक्षुः प्रार्थनोत्तरम् ।
उपेत्य पुस्तिकापाणिस्तं ययाचे कुतूहली ॥ १० ॥

अब्रवीत्सोपहासं श्रीगान्धिरागन्तुकं तदा ।
विंशत्या भद्र मुद्राणां तदेतल्लेतुमर्हसि ॥ ११ ॥

कृते हरिजनस्याहं संजिघृक्षुर्धनं सदा ।
सर्वहस्ताक्षरार्थिभ्यो विक्रीणेऽहं वणिक्क्रियः ॥ १२ ॥

निशम्य वचनं तस्य विदेशीयः स्मिताननः ।
उद्धृत्य कोशतो द्रव्यमर्पयन्मुनयेऽब्रवीत् ॥ १३ ॥

धनं मे केवलं देहि यातुं मोहमयीं पुरीम् ।
महात्मन्नवशिष्टं ते विनियोगाय कल्पताम् ॥ १४ ॥

रूप्यकान् गणयित्वाथ तेभ्यः पञ्चदशाग्रहीत् ।
प्रत्यदादवशिष्टं च तरुणाय धनं मुनिः ॥ १५ ॥

गान्धेर्हस्ताक्षरं लब्ध्वा युवा प्रमुदितान्तरः ।
निर्ययौ देशजेभ्यस्तत्प्रदर्शयितुमुत्सुकः ॥ १६ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये देशखण्डनात्मकः
पञ्चचत्वारिंशोऽध्यायः ।



## सप्तचत्वारिंशोऽध्यायः

### काश्मीरप्रस्थानम् ।

सप्ताहानन्तरं गान्धिरवादीत्प्रार्थनोत्तरम् ।
" स्थेयं मया विहारेषु नवखालीपुरेऽथवा ॥ १ ॥

विप्लवेऽस्मिन्नतिक्लिष्टान् तत्तद्देशनिवासिनः ।
सेवितुं वाऽथवा मर्तुं प्रतिज्ञाऽद्य कृता मया ॥ २ ॥

नवखालीं द्रुतं यातुं भूयादवसरो मम ।
इत्येवं परमात्मानं प्रार्थये ह्येकनिष्ठया ॥ ३ ॥

वह्निकुण्डेऽप्यवस्थाय भुवोऽनृत्यद्यथा पुरा ।
प्रभवेयं तथैवाहं सन्तप्ते तत्र नर्तितुम् " ॥ ४ ॥

धनक्षेत्रादि सर्वस्वसमभागित्ववादिनाम् ।
सभामथ समुद्दिश्य प्रोक्तवानेकदा मुनिः ॥ ५ ॥

सर्वस्वसमसत्तेति पदं श्रोत्रमनोहरम् ।
जगत्यां हि समाः सर्वे नोच्चः कोऽपि न चावरः ॥ ६ ॥

शरीरशिखरस्थित्या नास्ति प्रोच्चतरं शिरः ।
न वा पादतले हीनतरे भूमितलस्पृशी ॥ ७ ॥

शरीरस्य यथाङ्गानि भजन्ति समतां मिथः ।
तथा सामाजिकाः सर्वे समाना निर्विशेषतः ॥ ८ ॥

समसत्ताप्रसङ्गेऽस्मिन् धर्मद्वैतं न विद्यते ।
सार्वलौकिकमेकत्वं स्पष्टमस्मात्प्रदृश्यते ॥ ९ ॥

अहिंसासत्यधर्माभ्यां यदा पूतप्रवृत्तयः ।
अवाप्स्यन्ति तदा सिद्धिं समभागित्वकाङ्क्षिणः " ॥ १० ॥

अयासौ ज्येष्ठमासान्ते ययौ दिल्लीपुरान्मुनिः ।
चिरप्रतीक्ष्यमाणः श्रीनगरं काश्मिरावनौ ॥ ११ ॥

नगरे तत्र सोऽवादीत्साक्षादिन्द्रपुरोपमे ।
नरेन्द्रप्रमुखान् लोकान् तथा राष्ट्रसभासदः ॥ १२ ॥

न चिराज्जम्मुकश्मीरौ भगवत्कृपयोभयौ ।
सम्पूर्णमधिगन्तारौ स्वातन्त्र्यं चिरकाङ्क्षितम् ॥ १३ ॥

अचिरस्थायिनी सेयं भविष्यति दशा यतः ।
पाकिस्थानेन तौ देशौ संयोज्यौ भारतेन वा ॥ १४ ॥

साहाय्यं वः सदा कर्ता राष्ट्रसङ्घ इति प्रजाः ।
समाश्वास्य ययौ गान्धिः कश्मीरनगरोत्तमात् ॥ १५ ॥

कल्कत्तानगरं प्राप्तस्तृतीयेऽहनि सानुगः ।
अग्रहीद्वसतिं श्रीमांस्तत्र सिद्धपुराश्रमे ॥ १६ ॥

पुरे प्रावर्तत क्षोभो मुनिस्तदकरोन्मतिम् ।
निर्गमं नगरात्किञ्चिद्विलंबयितुमात्मनः ॥ १७ ॥

दर्शं दर्शं स विध्वंसं विहितं हिन्दुभिर्मुनिः ।
श्रावं श्रावं च दुर्वार्तामपानतमुखोऽभवत् ॥ १८ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये काश्मीरप्रस्थानं ना
सप्तचत्वारिंशोऽध्यायः ॥



# अष्टचत्वारिंशोऽध्यायः

## स्वराज्यलाभः ।

अथाब्दस्याष्टमे मासि शुभे पञ्चदशेऽहनि ।
पूर्णस्वराज्यमार्तण्डः समुदैद्भारताम्बरे ॥ १ ॥

देशाङ्गच्छेदतो राष्ट्रयुगलं समजायत ।
पाकिस्थानाभिधं ह्येकमन्यत्संयुक्तभारतम् ॥ २ ॥

सिंधुपश्चिमपञ्चाम्बुप्राच्यवंगीयभूमयः ।
पश्चिमोत्तरदेशश्च पाकिस्थाने निवेशिताः ॥ ३ ॥

अवशिष्टं विहायैतान् विशालावनिमण्डलम् ।
अवतस्थे यथापूर्वं विषयो भारताङ्कितः ॥ ४ ॥

मङ्गले सर्वतस्तस्मिन् स्वातन्त्र्यप्राप्तिवासरे ।
आसेतोरातुषाराद्रिं व्यजृम्भन्त महोत्सवाः ॥ ५ ॥

दिल्लीमोहमयीमद्रकल्कत्तानगरादिषु ।
गेहे गेहे त्रिवर्णोऽभूद्राष्ट्रकेतुः समुच्छ्रितः ॥ ६ ॥

कार्यालयाश्च हर्म्याणि दीनानां मन्दिराणि च ।
दीपोज्ज्वलान्यभासन्त दीपावल्युत्सवे यथा ॥ ७ ॥

नगरे नगरे ग्रामे ग्रामे च दिवसत्रयम् ।
स्वराज्यस्य महो देशे चलति स्म सवैभवम् ॥ ८ ॥

स्त्रीपुमर्भकवृन्दानि पर्याटुः शतशो निशि ।
राजमार्गाल्परथ्यासु द्रष्टुं दीपमहोत्सवम् ॥ ९ ॥

युवकाश्च समारूढा यन्त्रयानमलङ्कृतम् ।
उदीरयन्तः सञ्चेरुः स्वातन्त्र्यस्य जयध्वनिम् ॥ १० ॥

वितेनुर्जयघोषं च भूयो भूयो महात्मनः ।
वन्दे मातरमित्यादि राष्ट्रगीतं जगुः परे ॥ ११ ॥

हर्षोत्साहपराकाष्ठां प्राप्य चेलुः सहस्रशः ।
पद्भ्यामेव जनाः स्वैरं विमुक्ता दास्यशृङ्खलात् ॥ १२ ॥

देशच्छेदात्समुद्भूता तेषां या प्राग्विषण्णता ।
निमग्ना निखिलाप्येषा स्वातन्त्र्यानन्दसागरे ॥ १३ ॥

अथ गान्धिर्निराहारोऽनैषीत्स्वातन्त्र्यवासरम् ।
सूत्रनिर्माणयज्ञेनाभ्यर्चयन् परमेश्वरम् ॥ १४ ॥

ईदनामनि दिष्ट्यात्र मुस्लिमानां महोत्सवे ।
पूर्ववत्पुरि संयुक्ताः सस्नेहं हिन्दुमुस्लिमाः ॥ १५ ॥

कल्कत्तानगरे तावत्प्रायतन्त महाजनाः ।
पक्षयोर्बन्धुवात्सल्यं संवर्धयितुमुत्सुकाः ॥ १६ ॥

अथ मौनदिने किञ्चिद्वृत्तमुद्दिश्य संयमी ।
गुर्वर्थगर्भितं लेखं प्राकाश्यमनयद्यथा ॥ १७ ॥

" ह्यो यद्गतरात्रौ मे मन्दिराङ्गणमाययुः ।
वहन्तस्तरुणाः केचित्पुरुषं मुस्लिमैः क्षतम् ॥ १८ ॥

समुद्घाटयितुं द्वारं यतमानेषु केषुचित् ।
आह्वयत्सु च मां तारं निर्घोषोऽभ्यधिकोऽभवत् ॥ १९ ॥

प्रबुद्धः सहसा गेहदेहलीं गतवानहम् ।
अयते च मुधैवैताननुनेतुं कुमारकान् ॥ २० ॥

वातायनकपाटानाममी काचानचूर्णयन् ।
*शिलां मय्यक्षिपंश्चैकां पार्श्वगं सा त्वताडयत् ॥ २१ ॥*

रक्षकैर्न चिरायूनां वृन्दमेतन्नियन्त्रितम् ।
क्षणं जोषमवस्थाय निर्जगाम गृहाङ्गणात् ॥ २२ ॥

नवखालीप्रयाणस्य चिन्ता दूरीकृता मया ।
आहूतश्चास्मि पाश्चात्यपञ्चाम्बुक्षितिवासिभिः ॥ २३ ॥

वङ्गेषु श्रूयते भूयो विप्लवस्य समुद्भवः ।
वृत्तमेतद्भवेत्प्रायोऽतिशयोक्तिकलङ्कितम् ॥ २४ ॥

दीयमानमतः पौरैरभयं प्रतिपालये ।
आशासे न पुरी भूयो विनाशपथमाश्रयेत् ॥ २५ ॥

यन्न साधयितुं शक्यमसकृद्घोषणैरपि ।
तदेतदुपवासो मे साधयेदिति तर्कये ॥ २६ ॥

उपोषणमहं रात्रावारभेऽद्याप्यवादने ।
धारयिष्ये मतं चैतदाप्रशान्तिफलोदयम् " ॥ २७ ॥

अथ द्वित्रदिनैरेव विप्लवः शमितोऽभवत् ।
सुहृद्भिरनुनीतः सन् जहौ गान्धिरुपोषणम् ॥ २८ ॥

उपवासव्रतत्यागात्पूर्वं तानब्रवीन्मुनिः ।
" उद्भवेच्चेत् पुनः क्षोभः सज्जोऽस्मि प्रायमासितुम् ॥ २९ ॥

आलस्याद्रक्षितुं पौरान् सज्जनान् शान्तिवत्सलान् ।
प्रोत्साहयितुमप्येतान् धृतमासीद् व्रतं मया " ॥ ३० ॥

क्षोभः पञ्चाम्बुदेशेऽथ वर्धमानो दिने दिने ।
समासाद्य परां काष्ठां प्रत्यभात्प्रलयोपमः ॥ ३१ ॥

तत्राल्पतरसंख्याकजनानां दारुणव्ययम् ।
स्फुटं वर्णयितुं शक्तिर्न स्यादादिकवेरपि ॥ ३२ ॥

तेषां क्षेत्रविनाशेन सर्वस्वनिलयादपि ।
लक्षोपलक्षसन्ताना निर्धनत्वमुपागताः ॥ ३३ ॥

एकस्यैव निशीथिन्या मृताः किल सहस्रशः ।
हिन्दवः सिक्खलोकाश्च ममार्यपुत्रयान्धराः ॥ ३४ ॥

गेहाभरणयानानि त्यक्त्वा श्रीलाः पलायिताः ।
स्वदेहानाहुतीचक्रुर्दीना विप्लवपावके ॥ ३५ ॥

अन्ये निर्वासिता मार्गे शेरते स्म च लक्षशः ।
समाह्वानं कृतान्तेन शङ्कमानाः प्रतिक्षणम् ॥ ३६ ॥

असंख्यजनसंदोहस्त्यक्त्वा स्वस्वजनुर्भुवम् ।
वव्राज पादचारेण दिल्लीमभि शनैःशनैः ॥ ३७ ॥

आसीत्क्रोशायता श्रेणिस्तेषामध्वनि सर्पताम् ।
यमक्षेत्रं प्रतिष्ठासुर्यात्रिकाणां चमूरिव ॥ ३८ ॥

तत्रासन् क्षेत्रसम्पन्नाः कृषिकाः श्रमजीविनः ।
शिल्पिनो भिक्षुकाश्चापि सर्वेऽपि शरणार्थिनः ॥ ३९ ॥

विमानेनाथवा धूमयानेन सकुटुम्बकाः ।
प्रागेव स्वेच्छया जग्मुः श्रीलाः संयुक्तभारतम् ॥ ४० ॥

पुरा पंजाबदेशस्य भोगभूमिर्बभूव या ।
सेयं लवपुरीदानीं ददृशे प्रेतभूरिव ॥ ४१ ॥

कौशेयाभरणानां च सुगन्धद्रव्यसम्पदाम् ।
आमोदिकुसुमानामप्यापणाः पिहिताः स्थिताः ॥ ४२ ॥

कार्यालयास्तथा पानगृहाणि च महापथे ।
लुण्ठिताशेषवस्तूनि पिहितान्यवतस्थिरे ॥ ४३ ॥

मुक्त्वा संग्रामयानानि तथा च पुररक्षिणः ।
प्रायशो राजमार्गोऽत्र जनशून्य इवाभवत् ॥ ४४ ॥

योऽवशिष्टोऽभवल्लोकः संविग्नो मुस्लिमेतरः ।
उत्पश्यन्नम्यवस्कन्दं स चकम्पे प्रतिक्षणम् ॥ ४५ ॥

यथा यथाऽपलायन्त लक्षशः सिक्तहिन्दवः ।
तथा तथाऽगमन्नानादिग्भ्योऽन्ये शरणार्थिनः ॥ ४६ ॥

श्रूयते च हताः शेखुपुरे लोकाः सहस्रशः ।
रक्षकैर्गुलिकास्त्रेण द्वित्रैरेव दिनैरिति ॥ ४७ ॥

पुरेभ्यो झङ्गचिन्योतप्रभृतिभ्यस्तथा कथाः ।
श्रोतुं भयानका बह्व्यः समायाताः प्रतिक्षणम् ॥ ४८ ॥

अल्पसंख्याकलोकानां शोणिताप्लुतवर्ष्मणाम् ।
साहाय्यप्रार्थना दौर्धीकृता पुररक्षिभिः ॥ ४९ ॥

पर्याप्तवाहनाभावादासीदत्यन्तदुष्करम् ।
प्रेषणं सिक्खहिन्दूनां प्रान्त्यं जनपदान्तरम् ॥ ५० ॥

पूर्वपश्चिमभागाभ्यां यत्तु पश्चाम्बुखण्डनम् ।
तेनासन्राजकार्याणि विपर्यस्तानि सर्वशः ॥ ५१ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये स्वराज्यलाभो
नाम अष्टचत्वारिंशतमोऽध्यायः ॥

# नवचत्वारिंशोऽध्यायः

## दिल्लीविप्लवः ।

अथ प्रस्थानतः पूर्वं कल्कत्तानगरान्मुनेः ।
आसीद्दिलीपुरी ग्रस्ता सर्वतो विप्लवाग्निना ॥ १ ॥

दाहहत्याबलात्कारगेहलुण्ठनपूर्वकात् ।
भाविनोऽत्याहिताल्लोकः कम्पते स्म प्रतिक्षणम् ॥ २ ॥

मुस्लिमाः पुरवास्तव्याः प्रत्यहं शतशो हताः ।
बभूवुश्च ततः शेषाः कान्दिशीकाः सहस्रशः ॥ ३ ॥

यदा तु विप्लवावेगः परां कोटिमुपास्पृशत् ।
तदा स्वस्वगृहाल्लोका निर्गन्तुमपि तत्रसुः ॥ ४ ॥

सार्वलौकिकयानानि यान्यधावन् पुरा पुरे ।
रक्पथात्तानि नष्टानि मुस्लिमैः स्वामिभिर्निजैः ॥ ५ ॥

स्वामिनोऽश्वरथानां ये न दिल्लीं परितत्यजुः ।
नष्टास्ते वाहनैः सर्वे यानशून्या पुरी स्थिता ॥ ६ ॥

मुस्लिमेषु विनष्टेषु कौटिकेष्वखिलेष्वपि ।
मांसिकव्यवहारोऽत्र विपण्यां विरतिं गतः ॥ ७ ॥

गेहक्षेत्राणि संत्यज्य विसृष्टस्वस्ववृत्तयः ।
शाकविक्रयिणस्त्रस्ता मुस्लिमेभ्यः पलायिताः ॥ ८ ॥

दुग्धविक्रयिणश्चापि प्रायशो हिन्दवोऽखिलाः ।
स्वग्रामान् गोधनैः सार्धं साध्वसाद्वव्रजुर्द्रुतम् ॥ ९ ॥

अथ कैश्चन सप्ताहैः पुनर्दिल्लीमुपागतम् ।
महात्मानं जनाः प्रोचुः शोचनीयां पुरीदशाम् ॥ १० ॥

शरणार्थिभिराक्रान्ते वाल्मीकिशिबिरेऽखिले ।
बिरलामन्दिरे रम्ये स्थेयमासीन्महात्मना ॥ ११ ॥

आरभ्यागमनाद्दिल्लीमशृणोत्स दिवानिशम् ।
विप्लवस्य बहून्वृत्तानतिबीभत्सदारुणान् ॥ १२ ॥

क्रियतां म्रियतां वेति कार्यपंक्तिमनुस्मरन् ।
आक्षोभप्रशमं दिल्ल्यामेव वासमरोचत ॥ १३

अथ तत्रोषितो नित्यं शिबिराच्छिबिरं ययौ ।
वासिता यत्र पञ्चाम्बुदेशीयाः शरणार्थिनः ॥ १४ ॥

अनुकम्पाकुलः सर्वैर्मृदुवाग् व्याहरन्मुनिः ।
अत्युदारगिराऽकार्षीद् व्यथितानां च सान्त्वनम् ॥ १५ ॥

एकदासौ कुरुक्षेत्रे शिबिरं शरणार्थिनाम् ।
समाश्वासयितुं सौम्यवचसाऽऽर्तजनान् ययौ ॥ १६ ॥

मालिन्यं वर्णनातीतं दृष्ट्वात्राऽभूज्जुगुप्सितः ।
किन्तु गत्यन्तराभावादसौ निर्वचनः स्थितः ॥ १७ ॥

शिबिरस्याधिकारी चेदभविष्यं यदृच्छया ।
धृत्वा खनित्रशोधन्यौ पर्यमार्क्ष्यं मुदा स्थलम् ॥ १८ ॥

यावत्पूर्णविशुद्धिं तत्प्रतिपद्येत सर्वतः ।
इत्येवं स विशुद्धात्मा निर्गमिष्यन्नचिन्तयत् ॥ १९ ॥

जीवनप्रदवृष्टेर्यः पतने मधुरस्वनः ।
तं श्रुत्वाऽचिन्तयद्रात्रौ बहिः स्थण्डिलशायिनः ॥ २० ॥

शयितोऽस्मि सुखं गेहे क्लिश्यन्ति भ्रातरो बहिः ।
नरस्य क्रूरहस्तेन त्याजिताः प्रसभं गृहान् ॥ २१ ॥

स्त्रीपुमर्भकसन्दोहा ह्यच्छतसहस्रशः ।
वस्त्रहीना निराहारास्तिष्ठन्त्यद्य निराश्रयाः ॥ २२ ॥

अनिवार्यं तदाऽऽसीत्किमिति चिन्तयतो मुनेः ।
सर्वथा नेति नेतीति हृदन्तर्दत्तमुत्तरम् ॥ २३ ॥

एकचिन्तापरो रात्रौ जोषमात्मानमब्रवीत् ।
अहो लोकाः किमुन्मत्ताः संजाता नष्टबुद्धयः ॥ २४ ॥

विलुप्तमानुपत्वास्ते संवृत्ताः श्वापदोपमाः ।
यदेते न प्रमोदन्ते स्वातन्त्र्योदयवैभवात् ॥ २५ ॥

न्यायकाङ्क्षी जनोऽन्यस्मात्स्वयं न्यायपरो भवेत् ।
न शक्यः करतालः स्यादेकेनैव हि पाणिना ॥ २६ ॥

सर्वान्निर्वासितान् शीघ्रं मुस्लिमान् सिक्खहिन्दवः ।
प्रार्थयन्तां पुनर्दिल्लीगृहानागम्यतामिति ॥ २७ ॥

ईदृग्विश्वासकृत्येन भविष्यन्ति न केवलम् ।
पाकिस्थानस्य पूजार्हाः परं कृत्स्नावनेरपि ॥ २८ ॥

रक्षितारो भवेद्दिल्लीं भारतं च कलङ्कतः ।
अचिन्त्यं सर्वजातीनां स्थानान्तरनिवासनम् ॥ २९ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये दिल्लीविप्लवो नाम नवचत्वारिंशोऽध्यायः ॥



## पञ्चाशोऽध्यायः

### शरणार्थिसान्त्वनम् ।

अथ मालिन्यमुद्दिश्य वासानां शरणार्थिनाम् ।
प्रार्थनावसाने श्रीमानभ्यधाद्गान्धिरेकदा ॥ १ ॥

" कुतः संमार्जनं सर्वैः परहस्तेन काम्यते ।
शरणार्थी स्वयं कुर्यादात्मगेहस्य मार्जनम् ॥ २ ॥

अस्पृश्यत्वकलङ्केन हिन्दुधर्मोऽस्ति दूषितः ।
सर्वैः संमार्जकैर्भाव्यं तदपोहनसिद्धये ॥ ३ ॥

आरोग्यं शिबिराणां चेद्रक्ष्यतेऽत्र निवासिभिः ।
तदा रम्यतमा दिल्ली भविष्यति महापुरी ॥ ४ ॥

तुच्छमेतदनुद्योगाद्दत्तासान्नस्य भक्षणम् ।
शरणार्थी ततः कुर्याद् व्यवसायं यथेप्सितम् ॥ ५ ॥

स भवेत्सूत्रनिर्माता तन्तुवायोऽथ सौचिकः ।
वर्धकिर्वाऽन्यशिल्पी वा यथाऽस्मै रोचते तथा ॥ ६ ॥

निमग्नाः किल कार्येषु विस्मरन्ति निजव्यथाम् ।
उद्योगिनमुपैति श्रीरुद्योगः शान्तिदायकः ॥ ७ ॥

विपदि प्रार्थयन्ते ये प्रसादं परमात्मनः ।
ते विपत्तिमतिक्रम्य प्राप्नुयुः शुभमात्मनः ॥ ८ ॥

रोगाविष्टाः पुनः केचित्क्लिश्यन्ति शरणार्थिनः ।
रामनाम हि जीवातुः सर्वक्लेशनिवृत्तये ॥ ९ ॥

राम एव गतिर्नृणां परेशो हि निराकृतिः ।
लोकैस्तु विविधाकारो गृह्यते ध्यानसिद्धये ॥ १० ॥

ये च रामाकृतिं द्रष्टुमिच्छन्ति परमेश्वरम् ।
तैरन्तर्दृष्टिभिर्भाव्यं विहाय कलहान्मिथः ॥ ११ ॥

मुस्लिमेष्वद्य वर्तन्ते शत्रुवत्सिकहिन्दवः ।
एते च मुस्लिमैर्भूयः क्लेशिता वैरशुद्धये ॥ १२ ॥

कृता देवालयाः सर्वे यवनप्रार्थनागृहाः ।
हिन्दुभिर्यावनागारैः कारिताश्च सुरालयाः ॥ १३ ॥

एवमन्योन्ययोर्धर्मैः कलहादुपमर्दितः ।
इत्थं कालक्रमेणोभौ नूनं धर्मौ विनङ्क्ष्यतः " ॥ १४ ॥

दीपावलिदिने सायं संयमी प्रार्थनोत्तरम् ।
बभाषे मिलितान्लोकानभिनन्दनपूर्वकम् ॥ १५ ॥

" दिनं विक्रमवर्षादेर्विशिष्टत्वेन गण्यते ।
तद्रात्रौ क्रियते लोकैर्दीपावलिमिरुत्सवः ॥ १६ ॥

रामरावणयोर्युद्धं सदसद्बलविग्रहः ।
तत्र पूर्वः पराजिग्ये द्वितीयं क्लेशमन्तरा ॥ १७ ॥

जेत्रा च रामराज्येऽथ स्थापितेऽभून्महोत्सवः ।
रामराज्यमिदानीं तु भारते न हि विद्यते ॥ १८ ॥

निर्वर्त्येत कथं तस्मादस्माभिर्विजयोत्सवः ।
स एव ह्युत्सवं कुर्याद्यस्य रामो हृदि स्थितः ॥ १९ ॥

प्रकाशयति तच्चेतः स रामः परमेश्वरः ।
तत्प्रकाशोत्सवेनासौ नन्दति प्रेमभाग्जनः ॥ २० ॥

ये व्रजन्ति निशि द्रष्टुं प्रकाशं कृत्रिमं नराः ।
हृदि प्रेमप्रकाशं ते दिवं रक्षन्तु सन्ततम् ॥ २१ ॥

अभिनन्दनमर्हन्ति तादृशा हि न संशयः ।
दिव्यदीपोत्सवास्ते स्यू रामराज्यप्रवर्तकाः ॥ २२ ॥

सोदरानिव मन्यध्वं जातिभेदनिरादराः ।
परः सहस्रलोकांस्तानत्यार्तान्मन्दभागिनः ॥ २३ ॥

सदसद्गुणसङ्घर्षः कविना सार्वकालिकः ।
रामरावणयुद्धेन सफलः सम्प्रदर्शितः ॥ २४ ॥

निर्भयाश्च पुनर्यावन्नायास्यन्त्यत्र मुस्लिमाः ।
दीपावल्युत्सवस्तावत्सर्वथा न हि शोभते ॥ २५ ॥

न च यावत्पुनर्यान्ति स्वगृहान् सिक्खहिन्दवः ।
न पाकिस्थानभूस्तावत्समृद्धिमुपयास्यति ॥ २६ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये शरणार्थिसान्त्वनं नाम
पञ्चाशोऽध्यायः ॥



# एकपञ्चाशोऽध्यायः

## अन्तिमप्रायोपवेशनम् ।

अथ कार्यक्रमे गान्धेर्दिल्ल्यां मासचतुष्टयम् ।
व्यतीतं नष्टसर्वस्वलोकानां सान्त्वनादिषु ॥ १ ॥

क्रिस्तजन्मोत्सवे सायं दैनिकोपासनोत्तरम् ।
क्रैस्तधर्माश्रितान् गान्धिरभिनन्द्याब्रवीद्यथा ॥ २ ॥

" अयि भोः क्रिस्तभक्तानां दिवसोऽयं सुमङ्गलः ।
यथा सर्वत्र हिन्दूनां दीपावलिमहोत्सवः ॥ ३ ॥

आशासे सर्वतः पृथ्व्यां क्रैस्तधर्मावलम्बिनः ।
सर्वात्मनानुवर्तेरन् शासनं निजसद्गुरोः " ॥ ४ ॥

आंग्लाब्दाग्रिममासस्य महात्मा द्वादशेऽहनि ।
अब्रवीत्संगतान्भक्तान् सखेदं प्रार्थनोत्तरम् ॥ ५ ॥

" इतः पाश्चात्यपञ्चाम्बुविषयं गन्तुमुत्सुकः ।
अहमागतवान् दिल्लीं पूर्वं मासचतुष्टयात् ॥ ६ ॥

दैवेन त्वन्यथा हन्त न्ययोजिषि किलेति मे ।
विदितं प्राप्तमात्रस्य लोहमार्गनिवेशनम् ॥ ७ ॥

पुरानन्दप्रफुल्लासीन्नगरी या मनोरमा ।
साऽद्य भाति निरानन्दा पितृकाननसंनिभा ॥ ८ ॥

अथ कार्यं विधास्यामि मरिष्याम्यन्यथापि वा ।
इति निश्चित्य पञ्चाम्बुप्रयाणं त्यक्तवानहम् ॥ ९ ॥

शान्तिरापाततो भाति सैनिकैरुपपादिता ।
द्वेषाग्निस्तु विलीनोऽन्तस्तिष्ठत्यौर्व इवाम्बुधौ ॥ १० ॥

को जानाति कदा सोऽयं सहसैव धगद् ज्वलेत् ।
नाविकोऽपि सुनिष्णातो न वेत्त्यौर्वाग्निसम्भ्रमम् ॥ ११ ॥

इयतैव प्रतिज्ञा मे फलितेति न मे मतिः ।
नित्यमित्राद्वेन्मृत्योस्तात्त्विकी शान्तिरेव माम् ॥ १२ ॥

चिरात्प्रदत्तसंज्ञोऽपि दिव्यवाचा हृदन्तरे ।
स्थितः पिहितकर्णोऽहमात्मदौर्बल्यशङ्कया ॥ १३ ॥

चिन्तयेदितरोपायान्पूर्वं सत्याग्रहमती ।
अशक्तस्यान्तिमोपायो नान्यः प्रायोपवेशनात् ॥ १४ ॥

अत्रान्तरेऽस्मि दौर्बल्यचिन्तया नित्यपीडितः ।
उपवासे समारब्धे जाने सा विनिवर्तते ॥ १५ ॥

तदेव ध्यायतस्त्रीणि दिनानि स्फुरितो हृदि ।
निर्णयः प्रायमाऽऽस्स्वेति दिव्योक्त्या स्पष्टमीरितः ॥ १६ ॥

हन्त मे परमानन्दमातनोति स निर्णयः ।
प्राणेभ्यो नापरं दानं महीयः शुद्धचेतसः ॥ १७ ॥

भूयाच्चित्तविशुद्धिर्मे पर्याप्ता व्रतपालने ।
इति सर्वात्मना भूयः प्रार्थये परमेश्वरम् ॥ १८ ॥

भूयाच्च युष्मदाशीर्भिः सफलं मे समीहितम् ।
मत्कृते प्रार्थ्यतामीशः स्वीकृतव्रतसिद्धये ॥ १९ ॥

अथ श्वः प्रातरारभ्य करिष्येऽहमुपोषणम् ।
भाव्यं कियच्चिरं तेनेत्यद्यापि न हि निश्चितम् ॥ २० ॥

न यावत्सर्वपक्षीयाः परिनिर्बन्धमन्तरा ।
स्वयमेकीभविष्यन्ति न तावत्तत्यजाम्यहम् ॥ २१ ॥

एवं कृते गता कीर्तिर्देशस्य पुनरेष्यति ।
प्रामवं चासियाखण्डस्योपरि स्यात्प्रतिष्ठितम् ॥ २२ ॥

भारते वाऽथ दिल्ल्यां वा कर्मण्यत्राखिलो जनः ।
अनुकूलं प्रवृत्तश्चेदुपवासोऽन्तमाप्नुयात् ॥ २३ ॥

फलं शुद्धोपवासोऽपि दत्ते कर्तव्यधर्मवत् ।
केवलं तु फलप्राप्त्यै बद्धाशो न स्थितोऽस्म्यहम् ॥ २४ ॥
अवश्यमेव कर्तव्यं मयैवेत्यवधार्य तत् ।
व्रतं गृहीतवानस्मि विकल्पः कोऽपि माऽस्तु वः ॥ २५ ॥
शान्तेन मनसा देहं त्यजेयमनुमोद्यताम् ।
इति बद्धाञ्जलिः सर्वान् प्रार्थये देशबान्धवान् ॥ २६ ॥
विमुक्तिः स्पृहणीया सा या भवेन्निधनेन मे ।
अन्यथाऽहं निबद्धः स्यां दुरीक्ष्यक्लेशबन्धनैः ॥ २७ ॥
तथा हि भारतस्यास्य नाशं नेक्षितुमुत्सहे ।
हिन्दुमुस्लिसिक्खानां धर्माणां च विशेषतः ॥ २८ ॥
पाकिस्थानं न चेत्कुर्यात्प्रजासु समदर्शिताम् ।
नानामताश्रितानां च प्राणवित्ताभिरक्षणम् ॥ २९ ॥
भारतं चानकुर्याच्चेत्तद्देशस्य व्यतिक्रमान् ।
भविता सर्वधर्माणामाशु नाशो न संशयः ॥ ३० ॥
इस्लामधर्मनाशः स्याद्भारते न तु तद्बहिः ।
न चास्ति हिन्दुसिक्खानां प्रचारो भारताद्बहिः ॥ ३१ ॥
ईदृग्मतधरः पुत्रो भारतस्याहमेककः ।
स्थितोऽस्मि रक्षितो दिष्ट्या विशुद्धदृढमानसः ॥ ३२ ॥
शुद्धिदार्ढ्यविहीनश्चेद्भारः स्यां केवलं भुवः ।
वरमाशु विनश्येयं शुध्यै देशपरिस्थितेः ॥ ३३ ॥
प्रायोपवेशनस्यास्य हेतुः शोधनमात्मनः ।
यज्ञियोपोषणस्यास्य संप्राप्नोतु फलं जनः " ॥ ३४ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये अन्तिमप्रायोपवेशनं नाम एकपञ्चाशोऽध्यायः ॥

# द्विपञ्चाशोऽध्यायः

## श्रीगान्धेरुपरि बम्भास्त्रक्षेपणम् ।

उपवासव्रतं तीव्रं धारयन्नपि संयमी ।
प्रतिसायमभाषिष्ट प्रार्थनोर्ध्वं यथापुरम् ॥ १ ॥

द्वित्रवासरपर्यन्तमलमासीद्बलं मुनेः ।
ततोऽतिमात्रनिस्सत्त्वः सन्नमन्थरवागभूत् ॥ २ ॥

तथापि शयितो मञ्चे नादवर्धकयन्त्रतः ।
भाषितुं प्रायतिष्टाल्पं मिलितान् बहिरङ्गणे ॥ ३ ॥

अथास्य देहदौर्बल्यादत्यन्तानिष्टशङ्किनः ।
आसेतोरातुषाराद्रिं लोकाश्चिक्लिशिरे भृशम् ॥ ४ ॥

अथार्चनाङ्गणे सायं लक्ष्यीकृत्य तमेकदा ।
सहसा प्राक्षिपत्कश्चिद्बम्भास्त्रं मानवाधमः ॥ ५ ॥

भगवत्कृपया गान्धिर्नाभवत्तेन विक्षतः ।
शान्तेन मनसा कृत्स्नां प्रार्थनां निरवर्तयत् ॥ ६ ॥

परेद्युश्च विशुद्धात्मा प्रदोषप्रार्थनोत्तरम् ।
उद्दिश्य पापिनः कृत्यमुदारां गिरमब्रवीत् ॥ ७ ॥

" बम्भास्त्रे स्फुटितेऽभ्यर्णेऽप्यहमासं निराकुलः ।
इति मामभिनन्दन्ति बहवः सुहृदो हि मे ॥ ८ ॥

प्रार्थनोत्तरमेवाहं बम्भास्त्रमिति बुद्धवान् ।
अभिलक्ष्य च मामेतत् क्षिप्तवान्कश्चिदित्यपि ॥ ९ ॥

भगवानेव जानाति व्यथास्यं यदहं तदा ।
यद्यस्त्रमस्फुटिष्यन्मे पुरतस्तद्विजानतः ॥ १० ॥

पातितोऽप्यहमस्त्रेण तिष्ठेयं चेत् स्मिताननः ।
क्षेसरि द्वेषहीनश्च तदा स्यां स्तुतिभाजनम् ॥ ११ ॥

युवाऽसौ कापथं नीतो यम्भास्त्रक्षेपको मयि ।
तथापि प्रार्थये वः स एष मा भूत्तिरस्कृतः ॥ १२ ॥

अस्ति शत्रुरसौ गान्धिर्हिन्दुधर्मस्य वस्तुतः ।
इति प्रायः प्रतीतो मां जिघांसुरभवद्युवा ॥ १३ ॥

स्वस्माद्भिन्नमतग्राही जनः सर्वोऽपि दुर्जनः ।
इत्यसौ नैव मन्येत सर्वथैव कुमारकः ॥ १४ ॥

प्रेषितोऽस्मीश्वरेणाहं दण्डनाय दुरात्मनाम् ।
इति तावत्स्ववैशिष्ट्यं नाभिमन्येत कश्चन ॥ १५ ॥

श्रूयते यत्स्थलाभावादिस्लामप्रार्थनालये ।
निवासमग्रहीदेष परोक्षमधिकारिणाम् ॥ १६ ॥

इस्लामध्यानगेहेभ्यो लोकेषु पुररक्षकैः ।
निष्कासितेषु रुष्टोऽभूत्तरुणोऽयं निराश्रयः ॥ १७ ॥

अधर्म्यं कृतवानेष श्रित्वेस्लामनिकेतनम् ।
दोषोऽस्य द्विगुणीभूतोऽनादरादधिकारिषु ॥ १८ ॥

कृत्ये प्रोत्साहितोऽस्मिन् यैर्युवा तान् प्रार्थये जनान् ।
अधर्म्यादीदृशोद्योगात्क्षिप्रमेव विरम्यताम् ॥ १९ ॥

हन्त नायं किलोपायो हिन्दुधर्माभिरक्षणे ।
मया निर्दिष्टमार्गेण शक्यतेऽसौ हि रक्षितुम् ॥ २० ॥

अभ्यस्तहिन्दुधर्मोऽहं सर्वदा शैशवादपि ।
भीतो रामं भजस्वेति प्राह धात्री पुरा हि माम् ॥ २१ ॥

काले संसर्गतः क्रैस्तेस्लामप्रभृतिधर्मिणाम् ।
तत्तद्धर्मान्परामृश्य हिन्दुधर्मेऽस्मि सुस्थिरः ॥ २२ ॥

यथा बाल्ये तथेदानीं श्रद्धाचारप्रवर्तिनम् ।
हिन्दुधर्मस्य मामीशो करिष्यत्येव रक्षकम् ” ॥ २३ ॥

अथ दिल्लीपुरे दिष्ट्या पुनः शान्तिर्व्यराजत ।
व्यापृताश्च स्वकार्येषु बभूवुर्हिन्दुमुस्लिमाः ॥ २४ ॥

अदूरे नगरादासीन्मेह्रोलीनामनि स्थले ।
समाधिः कस्यचित्साधोः खिस्तिनाम्नः सुविश्रुतः ॥ २५ ॥

विप्लवे स दुराचारैर्बभूवातिविरूपितः ।
शलाकावृतिरस्यासीद्रमणीया विनाशिता ॥ २६ ॥

तस्य नष्टसमुद्धारं विधातुं गान्धिनार्थिताः ।
प्रयत्नान्महतश्चक्रू राष्ट्रसङ्घीयमन्त्रिणः ॥ २७ ॥

प्रतस्थे स्वानुगैः सार्धं महात्मा प्रातरेकदा ।
पर्यवस्थापितं द्रष्टुं तत्समाधिनिवेशनम् ॥ २८ ॥

तमेनं दिवसे तस्मिन्ननुजग्मुश्च मुस्लिमाः ।
बहवो हिन्दवश्चापि ये साधौ श्रद्धयान्विताः ॥ २९ ॥

नमस्कृत्यात्र साष्टाङ्गमिस्लामाचारमाश्रितः ।
प्रार्थनां मनसा चक्रे महात्मा मन्दिराग्रतः ॥ ३० ॥

हिन्दुभिर्लघुचेतोभिर्वृथाक्षेपविधायकैः ।
अनिन्द्यततरामेतन्निर्व्याजचरितं मुनेः ॥ ३१ ॥

परमानर्थमेतेषाममर्षः क्षुद्रचेतसाम् ।
न चिराज्जनयामास धिगत्यन्तमयावहम् ॥ ३२ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये श्रीगान्धेरुपरि बम्बाक्ष-
क्षेपणं नाम द्वापञ्चाशोऽध्यायः ॥

# त्रिपञ्चाशोऽध्यायः

## महात्मनो निर्वाणम् ।

इतः पूर्वं द्विसाहस्राद्वत्सरेभ्यो निजैर्जनैः ।
†येसुस्तत्रभवान् क्रिस्तो जघ्ने विद्धकलेवरः ॥ १ ॥

घोरकृत्यमभूद्देतदेकस्मिन् भृगुवासरे ।
स्मरन्ति तद्दिनं भक्ताः शोकेन प्रतिवत्सरम् ॥ २ ॥

*वस्वब्धिग्रहचन्द्राब्दाग्रिममासान्तपूर्वगे ।
त्रिंशेऽहनि भृगोर्वारे बिर्लाहर्म्यमहाङ्गणे ॥ ३ ॥

बभूवुर्मिलिताः सायं प्रायः पञ्चशतं जनाः ।
गान्धौ चिरायिते किञ्चिदमी तस्थुः समुत्सुकाः ॥ ४ ॥

तावन्नांसौ समालम्ब्य स्वपौत्र्योश्शनकैर्मुनिः ।
निर्गतो बिरलाहर्म्यात् स्मयमानमुखाम्बुजः ॥ ५ ॥

बद्धाञ्जलिपुटः सौम्यः प्रचक्राम पुरो यथा ।
सभां प्रति ददुर्गन्तुमवकाशं तथा जनाः ॥ ६ ॥

संनिकर्षत्यसौ यावत्प्रोच्चं प्रवचनासनम् ।
तावत्कोऽपि जनस्तोमादुत्सृत्य सहसा युवा ॥ ७ ॥

स्प्रष्टुकाम इवास्याङ्घ्री नमिताङ्गः शनैः स्वयम् ।
अब्रवीदद्य गान्धे त्वं विलंबं कृतवानिति ॥ ८ ॥

निवारितोऽपि पौत्रीभ्यामपास्य रभसादुभे ।
द्विवारमुत्ससर्जासौ गुलिकास्त्रं महात्मनि ॥ ९ ॥

घातुको नाथुरामाख्यः स्थितोऽयं निश्चलस्ततः ।
घूर्णन्नत्रान्तरे गान्धी रामरामेत्युदैरयत् ॥ १० ॥

---

† Jesus Christ

*१९४८ खिस्ताब्दे

पौत्र्येका तं पतिष्यन्तं सावधानमधारयत् ।
उपविश्यावनौ चान्या स्वाङ्के तन्मस्तकं न्यधात् ॥ ११ ॥

हाहाकारेऽथ संजाते जनस्य प्रार्थनाभुवि ।
स्रवद्रक्ताम्बरो गान्धिर्मन्दिरान्तरनीयत ॥ १२ ॥

अथ बिर्लागृहारामपालकः क्रोधमूर्च्छितः ।
अस्त्रमाहृत्य हन्तारमकरोद्रक्षिणां वशे ॥ १३ ॥

अनाथवज्जनेषूच्चैर्विलपत्सु महाङ्गणे ।
गान्धिः स्वशयनागारे पर्यङ्के शायितोऽभवत् ॥ १४ ॥

ददृशेऽत्र स पुण्यात्मा मुग्धमन्दस्मिताननः ।
बद्धाञ्जलिश्च हन्ता मे क्षान्तोऽस्तीति वदन्निव ॥ १५ ॥

समाप्य नश्वरीं यात्रामैहिकीं राष्ट्रजन्मदः ।
शाश्वतीं घटिकार्धेन दिव्ययात्रामुपाददे ॥ १६ ॥

वृत्तान्तोऽयं दुरन्तस्य वडवाग्निरिवोदधौ ।
प्रससार पुरे तस्मिन् न चिराद्भारतेऽखिले ॥ १७ ॥

सर्वकार्यालयाश्चित्रशालाः पानगृहास्तथा ।
आपणाः सकलाश्चापि बभूवुः पिहिताः क्षणात् ॥ १८ ॥

विहाय स्वस्वकार्याणि श्रीनेहरुवल्लभादयः ।
मर्माविधा शुचा ग्रस्ता बिर्लामन्दिरमाययुः ॥ १९ ॥

विशालमङ्गणं प्रोच्चैर्विलपद्भिः सगद्गदम् ।
माद्ये परःशतैः पौरैरासीन्निबिडसङ्कुलम् ॥ २० ॥

अभितः शयनीयं च यत्र गान्धेर्वपुः स्थितम् ।
पुत्रा बभूवुरासीनाः पौत्र्यश्चान्ये च बान्धवाः ॥ २१ ॥

गतेऽस्य चरमे श्वासे यथास्तेऽर्कांशुरन्तिमः ।
पठितुं भगवद्गीतामारभन्तानुयायिनः ॥ २२ ॥

अन्ये गद्गदकण्ठेन जगुर्गीतं मुनिप्रियम् ।
"वैष्णवेजनतो तेने" इत्यादिपदगुम्फितम् ॥ २३ ॥

राजप्रतिनिधिः श्रीमान् सजानिर्मौण्टबाटनः ।
मन्त्रिणश्चान्यदेशानां बिर्लागेहं समाययुः ॥ २४ ॥

अत्रान्तरे जनस्तोमो महान्संमिलितः स्थितः ।
अन्नोदकं परित्यज्य विशाले प्रार्थनाङ्गणे ॥ २५ ॥

गम्यतां स्वस्वगेहानीत्यर्थितोऽपि तदा जनः ।
स्थितोऽत्र चिरयन्नेव गान्धिमीक्षितुमुत्सुकः ॥ २६ ॥

जीवत्यद्य महात्मेति केनचित्समुदीरिते ।
अभ्यद्रवज्जनो गेहं प्रविविक्षुर्बलादपि ॥ २७ ॥

श्रीमान्नेहरुरिदं दृष्ट्वा निर्गत्य सदनाद्बहिः ।
स्वयं न्यवेदयत् साश्रो 'गान्धिरुत्क्रान्तजीवितः' ॥ २८ ॥

तच्छ्रुत्वा व्यलपन् केचिदपरे व्यलुठन्भुवि ।
केचिदास्फोटयन्वक्षः पाणिभ्यां शोकमूर्च्छिताः ॥ २९ ॥

स्नापिताञ्जनलिप्तं तच्छुभ्रखद्दरवेष्टितम् ।
अनीयत मुनेः पूतं मन्दिराग्रतलं वपुः ॥ ३० ॥

तत्रोपवेशितं पीठे सोपधानं समुन्नते ।
बभूव सर्वलोकानामधस्ताद् दृष्टिगोचरम् ॥ ३१ ॥

भवनाग्रतलं रेजे दीपमालासमुज्ज्वलम् ।
सचेतन इव श्रीमान् बभौ गान्धिः स्मिताननः ॥ ३२ ॥

जीयाद्गान्धिरिति प्रोच्चैर्जनाक्रन्दस्तदीक्षणात् ।
उत्थितो जनयामास निद्रेऽपि प्रतिध्वनिम् ॥ ३३ ॥

अपनीते पुनः श्वेतकायेऽधस्तात्प्रकोष्ठकम् ।
विलपन्तो जना जग्मुः शनकैः स्वस्वमन्दिरम् ॥ ३४ ॥

बान्धवाः परितो गान्धिं सर्वरात्रमजागरुः ।
आर्द्रयन्तोऽश्रुधाराभिः प्रेतशय्यां मुहुर्मुहुः ॥ ३५ ॥

कोणे चास्य प्रकोष्ठस्य केचित्तस्यानुयायिनः ।
भगवद्गीतिकापाठं व्यदधुः सततं निशि ॥ ३६ ॥

परेद्युः प्रत्युषस्येव स्नपितं लिप्तकुङ्कुमम् ।
तद्वपुः पुत्रपौत्रीभिर्वहिर्निन्ये प्रकोष्ठतः ॥ ३७ ॥

ततस्तत्स्थापयामासुः खद्दराम्बरवेष्टिते ।
साङ्ग्रामिके बृहद्याने पुष्पमाल्यैरलङ्कृते ॥ ३८ ॥

अग्रभागेऽस्य यानस्य स्थितौ पुत्रौ महात्मनः ।
पार्श्वयोरुपविष्टौ च नेहरूसर्दारवल्लभौ ॥ ३९ ॥

ततो महति मध्याह्ने प्रेतयात्रा महीयसी ।
बिर्लागृहाङ्गणाज्जोपं प्रातिष्ठत शनैः शनैः ॥ ४० ॥

अनुजग्मुः सहस्राणि लोकानां जयघोषिणाम् ।
तथा च नरनारीणां रुदतीनां सगद्गदम् ॥ ४१ ॥

गायन्तो रामधुन्गीतं प्रियं गान्धेः सुहृज्जनाः ।
शोकाकुलितकण्ठेन व्रजन्ति स्म समूहशः ॥ ४२ ॥

सैन्यनौकाविमानानां मुख्याः प्रौढाधिकारिणः ।
पुष्पराशिमयं यानं प्रेतस्य चकृषुः शनैः ॥ ४३ ॥

विदेशमन्त्रिणः सर्वे राजधान्यां प्रतिष्ठिताः ।
शोकानुरूपनेपथ्या अन्वयुः स्वरथैः पृथक् ॥ ४४ ॥

सिक्खवीराः सितोष्णीषा गुरखाः खर्वपीवराः ।
महाराष्ट्रभटा राजपुत्रयोधाश्च सायुधाः ॥ ४५ ॥

सम्राट्प्रतिनिधेरङ्गरक्षका धृततोमराः ।
नौकाविमानपत्तीनामधिपाः पृष्ठतोऽन्वयुः ॥ ४६ ॥

ततः पश्चाज्जनश्रेणी क्रोशैर्बहुभिरायता ।
लक्षोपलक्षसङ्ख्याका शुचाक्रान्ताऽगमच्छनैः ॥ ४७ ॥

राजमार्गतरुश्रेणी मुनेर्दर्शनकाङ्क्षिणाम् ।
शाखाधिरूढलोकानां गुरुभारादभून्नता ॥ ४८ ॥

सपादघटिकाकाले प्रेतयात्राजनार्णवः ।
राजधान्याः पुरावृत्तविश्रुतं प्राप गोपुरम् ॥ ४९ ॥

विसृष्टैः सुमनोवर्षैः प्रतिगेहं प्रतिक्षणम् ।
ददृशे पुष्पवाटीव प्रेतशय्या सिताम्बरा ॥ ५० ॥

ये जनास्तु समारुह्य स्थिता भारतगोपुरे ।
बभूव सुलभं तेषां यात्रायाः पूर्णदर्शनम् ॥ ५१ ॥

सव्यापसव्यशाखाभ्यां द्विधाभूते महापथे ।
भवति स्म जनस्तोमः सान्द्रसान्द्रो मुहुर्मुहुः ॥ ५२ ॥

चक्रुर्गोपुरस्याधः प्रदेशेषु धृतायुधाः ।
गुर्खवीरा जनौघस्य रक्षणे समवेक्षिणः ॥ ५३ ॥

चरमं दर्शनं गान्धेर्बहुभिः कर्तुमुत्सुकैः ।
विसृष्टोऽत्र महानासीत्पादनोदरथमजः ॥ ५४ ॥

मौनमैकान्तिकं लोका यात्रायामभ्यरक्षिषुः ।
अतिमात्रव्ययो ह्यासीद्यानकवधाज्जनः ॥ ५५ ॥

अपायानपि संभाव्यान् निवारयितुमिच्छया ।
सज्जितान्यग्नियन्त्राणि चलन् रुग्णालयोऽपि च ॥ ५६ ॥

जीयाद्गान्धिर्महात्मेति क्रन्दद्भिस्तु जनैर्मुहुः ।
निश्शब्दता विनष्टाऽभूद्यात्रिकाणां पदे पदे ॥ ५७ ॥

धृतकृष्णध्वजाः शोकाज्जनमध्ये प्रचक्रमुः ।
हिन्दुमुस्लिमसिक्खांग्लपारसीकादयो जनाः ॥ ५८ ॥

यस्तु पञ्चमजार्जाख्यभूपतेर्विग्रहो महान् ।
तस्याधः शोभनं यात्रादिदृक्षूणामभूत्स्थलम् ॥ ५९ ॥

विग्रहं परितोऽस्त्येका गाधा कृत्रिमदीर्घिका ।
तामुत्तीर्य परं पारमासेदुर्बहवो जनाः ॥ ६० ॥

आरुह्य प्रतिमामूलं तस्याः स्तम्भावलम्बिनः ।
तस्थुः परश्शता लोका यात्रालोकसमुत्सुकाः ॥ ६१ ॥

राजधान्या बहिर्द्वारं प्रेतयात्रा यदासदत् ।
भूयो भूयो विमानेभ्यो निपेतुः पुष्पवृष्टयः ॥ ६२ ॥

गायत्सु भगवद्गीतामनुगेषु महात्मनः ।
प्रोच्चकैस्तज्जयाकारं कलयत्सु जनेषु च ॥ ६३ ॥

महाकारालयं दिल्याः प्रेतयात्रा समासदत् ।
पपात सुमनोवृष्टिर्यत्र पर्जन्यवर्षवत् ॥ ६४ ॥

बभूव कोटिसंख्याकः प्रेतयात्रागतो जनः ।
नेदृशी महती यात्रा दृष्टपूर्वाऽत्र भारते ॥ ६५ ॥

न पुरा न च वाऽद्यत्वे कृत्स्नेऽपि जगतीतले ।
मानितः सार्वभौमोऽपि तादृशप्रेतयात्रया ॥ ६६ ॥

अथ सा प्राप पर्यन्ते यमुनासरितस्तटम् ।
दिगन्तव्यापिनी यत्र ददृशे जनसंहतिः ॥ ६७ ॥

बद्धमौनाः स्थिताः सर्वे क्षणं भाविप्रतीक्षया ।
ततो गान्धिजयाक्रन्दैः पूरयाञ्चक्रिरे दिशः ॥ ६८ ॥

मानोरस्तमयात्पूर्वं प्रेतप्रवहणाद्वपुः ।
अपनीतं तदा गान्धे राजघट्टाख्यसङ्क्रमे ॥ ६९ ॥

अथ हस्तत्रयायामवेदिकायां सुहृज्जनैः ।
प्रागेव निर्मितायां सा प्रेतशय्या न्यधीयत ॥ ७० ॥

घृतचन्दनकर्पूरनालिकेरादिपूरिता ।
चिता शुद्धात्मनः साऽभूदुचिता चक्रवर्तिनः ॥ ७१ ॥

अभिषिच्य वपुस्तीर्थजलेनादौ महात्मनः ।
चिताध्यारोपितं विप्रैश्चक्रे मन्त्राग्निसंस्कृतम् ॥ ७२ ॥

श्रीमन्नेहरूस्ततो जोषं सबाष्पः समुपेत्य तम् ।
जानुपातं नमस्कृत्य चुचुम्ब चरणौ मुनेः ॥ ७३

रामदासस्ततः श्रीमान् ज्येष्ठपुत्रो महात्मनः ।
यथाविधि चिताराशिमिन्धाञ्चक्रे विदूनधीः ॥ ७४ ॥

धूमराशिः क्षणाच्छुण्डीशुण्डादण्ड इवोत्थितः ।
देवलोकं प्रतिष्ठासुं द्रष्टुमिच्छन्निव स्वयम् ॥ ७५ ॥

अथार्केऽस्तमिते गान्धेर्भस्मीभूतकलेवरम् ।
तथाप्यस्य यशःकायस्तिष्ठत्येव निरन्तरम् ॥ ७६ ॥

ततो भूयिष्ठलोकेषु निर्गतेषु निजालयान् ।
तत्रैव बहवस्तस्थुः सर्वामपि निशीथिनीम् ॥ ७७ ॥

केचिच्चन्दनखण्डानि केचित्पुष्पदलानि च ।
अन्विष्यन्तो निशां निन्युर्भस्मराशौ पुनः पुनः ॥ ७८ ॥

अथ राष्ट्रपितुर्मृत्योर्वार्ता पूर्वेद्युरेव सा ।
श्रुताऽभूद्भुवने सार्धघटिकाद्वितयान्तरे ॥ ७९ ॥

तन्त्रीद्वारांग्लभूपेन्द्रः प्राहेत्थं शोकमात्मनः ।
' कम्पितोऽस्मि सभार्योऽहं श्रीगान्धेर्मृतिवार्तया ॥ ८० ॥

हानिरप्रतिसन्धेया भारतस्य न केवलम् ।
परं मानुष्यकस्यैव दुर्दैवात्समजायत ॥ ८१ ॥

ईदृग्विपदि लोकानां सानुकम्पोक्तिरावयोः ।
मम प्रतिनिधिद्वारा प्रेषिता गृह्यतां जनैः ' ॥ ८२ ॥

अथाऽमेरिकखण्डस्य ट्रूमन्नामा प्रजाधिपः ।
प्रेषयामास संदेशं दर्शयन् शोकमात्मनः ॥ ८३ ॥

'शान्तिसोदर्यताहेतोः परिश्राम्यन्निरन्तरम् ।
गतासुः पतितो गान्धिः स महान्पुरुषर्षभः ॥ ८४ ॥

आसीच्छ्रीमानसौ नेता सुवो राष्ट्रहितैषिणाम् ।
वशीचक्रे नृणां कोटीरेष चोधैश्च कर्मभिः ॥ ८५ ॥

जीवनं चरितं चास्य स्यास्यतः स्मृतिरक्षिणी ।
लोकोत्तरमहिम्नोऽस्य नित्यं युगयुगान्तरे' ॥ ८६ ॥

अथान्ये शोकसंदेशाः प्राच्यपाश्चात्यखण्डतः ।
तन्त्रीद्वारा समाजग्मुः शतशो देशमन्त्रिणाम् ॥ ८७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये महात्मनो निर्वाणं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥

धृतचन्दनकर्पूरनालिकेरादिपूरिता ।
चिता शुद्धात्मनः साऽभूदुचिता चक्रवर्तिनः ॥ ७१ ॥

अभिषिच्य वपुस्तीर्थजलेनादौ महात्मनः ।
चिताध्यारोपितं विप्रैश्चक्रे मन्त्राग्निसंस्कृतम् ॥ ७२ ॥

श्रीमन्नेहरुस्ततो जोषं सबाष्पः समुपेत्य तम् ।
जानुपातं नमस्कृत्य चुचुम्ब चरणौ मुनेः ॥ ७३

रामदासस्ततः श्रीमान् ज्येष्ठपुत्रो महात्मनः ।
यथाविधि चिताराशिमिन्धाञ्चक्रे विदूनधीः ॥ ७४ ॥

धूमराशिः क्षणाच्छुण्डीशुण्डादण्ड इवोत्थितः ।
देवलोकं प्रतिष्ठासुं द्रष्टुमिच्छन्निव स्वयम् ॥ ७५ ॥

अथार्केऽस्तमिते गान्धेर्भस्मीभूतकलेवरम् ।
तथाप्यस्य यशःकायस्तिष्ठत्येव निरन्तरम् ॥ ७६ ॥

ततो भूयिष्ठलोकेषु निर्गतेषु निजालयान् ।
तत्रैव पह्वस्तस्थुः सर्वामपि निशीथिनीम् ॥ ७७ ॥

केचिच्चन्दनखण्डानि केचित्पुष्पदलानि च ।
अन्विष्यन्तो निशां निन्युर्भस्मराशौ पुनः पुनः ॥ ७८ ॥

अथ राष्ट्रपितुर्मृत्योर्वार्ता पूर्वेद्युरेव सा ।
श्रुताऽभूद्भुवने सार्धघटिकाद्वितयान्तरे ॥ ७९ ॥

तन्त्रीद्वारांग्लभूपेन्द्रः प्राहैत्थं शोकमात्मनः ।
‘ कम्पितोऽस्मि सभार्योऽहं श्रीगान्धेर्मृतिवार्तया ॥ ८० ॥

हानिरप्रतिसन्धेया भारतस्य न केवलम् ।
परं मानुष्यकस्यैव दुर्दैवात्समजायत ॥ ८१ ॥

ईदृग्विपदि लोकानां सानुकम्पोक्तिरावयोः ।
मम प्रतिनिधिद्वारा प्रेषिता गृह्यतां जनैः ’ ॥ ८२ ॥

अथाऽमेरिकखण्डस्य ट्रूमन्नामा प्रजाधिपः ।
प्रेषयामास संदेशं दर्शयन् शोकमात्मनः ॥ ८३ ॥

'शान्तिसोदर्यताहेतोः परिश्राम्यन्चिरन्तरम् ।
गतासुः पतितो गान्धिः स महान्पुरुषर्षभः ॥ ८४ ॥

आसीच्छ्रीमानसौ नेता भुवो राष्ट्रहितैषिणाम् ।
वशीचक्रे नृणां कोटीरेष योधैश्च कर्मभिः ॥ ८५ ॥

जीवनं चरितं चास्य स्थास्यतः स्मृतिरक्षिणी ।
लोकोत्तरमहिम्नोऽस्य नित्यं युगयुगान्तरे' ॥ ८६ ॥

अथान्ये शोकसंदेशाः प्राच्यपाश्चात्यखण्डतः ।
तन्त्रीद्वारा समाजग्मुः शतशो देशमन्त्रिणाम् ॥ ८७ ॥

इति सौ. क्षमायाः कृतिषु स्वराज्यविजये महात्मनो निर्वाणं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥

## चतुःपञ्चाशोऽध्यायः

### ग्रन्थोपसंहारः ।

किं भूयोल्लेखनेनास्य चरितस्य महात्मनः ।
मृतोऽपि यः सजीवोऽन्तः सर्वदा भ्रियते जनैः ॥ १ ॥

धन्याः किल वयं सर्वे युगेऽस्मिन् प्राप्तसंभवाः ।
चरन्तः क्ष्मातलं तस्य पावितं पादरेणुभिः ॥ २ ॥

परस्सहस्रवर्षोर्ध्वं स्मरिष्यन्ति जनाः किल ।
महात्मानमिमं गान्धिं जनांश्च समकालिकान् ॥ ३ ॥

स महापुरुषो लोकैः पूजितः सकलप्रियः ।
निजघ्ने देशजेनेति भारतस्य अपाकरम् ॥ ४ ॥

तत्रापि हिन्दुनैकेन हिन्दुष्वपि महत्तमे ।
उद्यतो हस्त इत्येष कलङ्को वागगोचरः ॥ ५ ॥

स्तुवन्ति सद्गुणान् पद्यैः पदलालित्यमण्डितैः
यशस्विनां च साधूनां कवयोऽनादिकालतः ॥ ६ ॥

परं त्वलोकसामान्यमूतप्रकृतिनिर्मितम् ।
अप्रमेयगुणोत्कर्षं कः स्तुवीयात्कवीश्वरः ॥ ७ ॥

महिमा जीवतोऽप्यस्य सर्वातिशयितोऽभवत् ।
कृत्स्नेन जगताप्यद्य पूज्यते स्वर्गतोऽपि सः ॥ ८ ॥

महतां सुप्रसिद्धानां कल्प्यन्ते स्मृतिरक्षकाः ।
शिलाकांस्यमयाः लोकैः प्रोच्चसुन्दरविग्रहाः ॥ ९ ॥

दिव्यतेजोभृतो गान्धेः सन्ति नावश्यका इमे ।
तस्य स्मृतिकरो भावः स्वयं यत्नेन निर्मितः ॥ १० ॥

सत्याऽहिंसात्मकः सोऽयं भावो भाविप्रजाततेः ।
शाश्वतस्मृतिरक्षायै प्रभवेद्यत्नरक्षितः ॥ ११ ॥

प्रससाराऽस्य दिव्याभा न परं धनिवेश्मसु ।
दीनानामपि दीनानामार्तानां च कुटीष्वपि ॥ १२ ॥

भारतं भवतीदानीमन्धकारपटावृतम् ।
पश्यन्ति जाग्रतो मार्गमन्तरन्वेषणार्चिषा ॥ १३ ॥

तमेनं च मुनेर्मार्गमनुवर्तेत चेज्जनः ।
निश्चितं भारते भूयः प्रकाश उपजायते ॥ १४ ॥

इति सौ. क्षमायाः कृतिषु उत्तरसत्याग्रहगीतायां
स्वराज्यविजयखण्डे ग्रन्थोपसंहारात्मकः चतुःपञ्चाशोऽध्यायः ॥

मोहमय्याम् ।
१-८-१९४९ वत्सरे ।